26 Indra. ४१ इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।
वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः ॥
४२ जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥
४३ वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी हरिहयः स्वाराण् नमुचिसूदनः ॥
४४ संक्रन्दनो दुश्च्यवनस्तुराषाण् मेघवाहनः ।
आखण्डलः सहस्राक्षः, ऋभुक्षास्तस्य तु प्रिया ॥

---

योपि ॥ ४० ॥ ( भृङ्गी भृङ्गरिटिस्तुण्डिनन्दिनौ नन्दिकेश्वरे । कर्णमोटी तु चामुण्डा चर्ममुण्डातिचण्डि [ च चर्चि- ]केति वक्तव्यम् ॥ ) इन्द्रः परमैश्वर्ययोगात् । मरुतो देवाः सन्त्यस्य मरुत्वान्, तसौमत्वर्थे ( ४।१।१९/१८९६ ) इति भसंज्ञायां पदकार्यं जश्त्वं नास्ति । मघः सौख्यमस्यास्तीति मघवा, श्वन्नुक्षन् ( १५७ उ० ) इत्यत्र तु निपातितस्य मघवन्नित्यस्य । पक्षे सौत्रादेशाद्दीर्घाभावान्मघवन्, मघवाबहुलम् ( ६।४।१२८/३६० )। वेवेष्टि विड् व्यापकमोजोऽस्य विडौजाः, विट्सु वा-ओजोस्य, पृषोदरादित्वात् ( ६।३।१०९/१०३४ ) वृद्धिः । बिड् भेदने वा, विडं भेदकमोजोऽस्य । पाकानां दितिगर्भाणां शासनः । वृद्धे श्रवसि अस्येति वृद्धश्रवाः, वृद्धेभ्यः श्रृणोति वा । शोभना नासीरा अग्रेसरा अस्य सुनासीरः, शुः पूजायां श्वशुरवत्, शुनासीर-योरपत्यमित्येके । पुरु प्रभूतं हूतं यज्ञेष्वाह्वानमस्येति पुरुहूतः । पुराण्यरीणां दारयति त्रिपुरं वा पुरंदरः, वाचंयमपुरंदरौ च ( ६।३।६९/२९५७ ) इति साधुः ॥ ४१ ॥ जयनशीलो जिष्णुः, ग्लाजिस्थश्च ग्स्नुः ( ३।२।१३९/३११९ )। लेखर्षभो देवश्रेष्ठः । शक्नोति शक्रः । शतं मन्यवः क्रतवोस्य शतक्रतुः ॥ दिवः स्वर्गस्य पतिः, षष्ठ्याः पतिपुत्रेति ( ८।३।५३/३६३८ ) अलुकि, कस्कादित्वात् ( ८।३।४८/१४४ ) सत्वे च दिवस्पतिः । सुष्ठु त्रायते सुत्रामा, मनिन्, शोभनं त्राम बलं वास्य । गोत्रान् गिरीन्पक्षच्छेदाद् भिन्नवान् गोत्रभित् । वस्वपत्यं वासवः । वृत्रबलजम्भनमुचयो-ऽसुराः । वर्षतीति वृषा, कनिन् ॥ ४२ ॥ वास्तोर्गृहक्षेत्रस्याधिष्ठाता वास्तोष्पतिः, षष्ठ्या अलुकि षत्वं, वास्तोष्पतिगृहमेधाच्छ च इति लिङ्गात् । हरयः पिङ्गा हया अस्य हरिहयः । स्वः स्वर्गे राजते स्वाराट्, ढ्लोपे पूर्वस्य दीर्घोऽणः ( ६।३।१११/१७४ ), व्रश्चभ्रस्जेति ( ८।२।३६/२९४ ) षः ॥ ४३ ॥ संक्रन्दयति रिपुस्त्रीः संक्रन्दनः, ल्युः । दुष्टं च्यवते परदारेषु रेतस्स्रुतेर्दुश्च्यवनः, चलनशब्दार्थादिति ( ६।२।१४८/३१२८ ) युच्, दुःखेन च्यवते रणाद्वा । तुरं त्वरितं साहयत्यभिभवत्य-रींस्तुराषाट्, तुरं वेगं सहते वा, छन्दसि सहः ( ३।२।६३/३४०९ ) इति ण्विः,

3 Saci.
1 *Indra's City*.

४५ पुलोमजा शचीऽन्द्राणी, नगरी त्वमरावती ।

1 horse.
charioteer.
1 garden.

हय उच्चैःश्रवाः, सूतो मातलिर्नन्दनं वनम् ॥

1 palace.
2 Jayanta.

४६ स्यात् प्रासादो वैजयन्तो, जयन्तः पाकशासनिः ।

4 *Indra's* elephant.

ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः ॥

10thunder-bolt.

४७ ह्रादिनी वज्रम-स्त्री स्यात् कुलिशं भिदुरं पविः ।
शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥

---

नहिवृतिवृषीति ( ६।३।११६ / १०३७ ) पूर्वपदस्य दीर्घः, सहेः साडः सः ( ८।३।५६ / ३२७ ) इति षत्वम् । मेघा वाहनमस्य, इन्द्रो हि मेघानाविश्य वर्षति, मेघ ऐरावतो वाऽऽधिष्ठातृत्वात् । आखण्डयति भिनत्त्यरीनाखण्डलः । ऋभून्देवान् क्षियत्यधिवसति ऋभुक्षः, यद्वा–अर्तेर्भुक्षिनक् ( उ० ? ), पथिमथ्यृभुक्षामात् ( ७।१।८५ / ३६७ ) । प्राचीनबर्हिरहिहा पृतनाषाट् पुलोमजित् । उग्रधन्वा च पुराणे ॥ ४४ ॥ पुलोम्नो मुनेर्जाता, अत एव पौलोमी । शचते शची, शच श्वच गतौ । इन्द्रस्य स्त्रीन्द्राणी, इन्द्रवरुणेति ( ४।१।४९ / ५०५ ) ङीषानुकौ । तस्येति प्रत्येकं संबध्यते । अमरा विद्यन्तेऽस्याममरावती, मतौ बह्वचोनजिरादीनां ( ६।३।११९ / १०४१ ) इति दीर्घः । उच्चैः श्रवसी अस्योच्चैःश्रवाः । तस्य सूतः सारथिर्मतलस्यापत्यं मातलिः । तस्योपवनं, नन्दयति नन्दनं, ल्युः ॥ ४५ ॥ विजयते विजयन्तो जिष्णुः, झच्, तस्येदम् ( ४।३।१२० / १५०० ) इत्यण्, वैजयन्ती अस्यास्तीत्येके । तस्य पुत्रो जयन्तः, पाकशासनस्यापत्यं ( पाकशासनिः ) । इरावत्यब्धौ जात ऐरावतः । अभ्रस्थत्वादभ्रमातङ्गः, अभ्ररूप इत्येके, यत्कात्यः–ऐरावतं विजानीयान्नागमम्बुदगोचरम् । इरावणोद्भव ऐरावणः, विभाषौषधीति ( ८।४।६ / १०५१ ) वा णत्वम् । अभ्रे खे माति न भ्राम्यति वा मन्थरगामिनीत्वादभ्रमुस्तद्भार्या, यल्लक्ष्यम्–अभ्रं वा जघनान्तदोलितकरः ( बा० रा० ) । सुरगजो गजमल्लश्च ॥ ४६ ॥ ह्रादः स्फूर्जथुरस्यास्तीति ह्रादिनी । वजति यात्येव न प्रतिहन्यते वज्रम् । कुलिनः पर्वताञ्श्यति पक्षच्छेदेन तनूकरोति कुलिशं, कुत्सितं लिक्षति तक्ष्णोत्यरीन्वा । भिनत्ति तच्छीलं भिदुरम्, विदिभिदिच्छिदेः कुरच् ( ३।२।१६२ / २४३२ ) । पुनाति पविः, हीरकस्य पविसंज्ञया प्रसिद्धत्वात् । शतं बह्वयः कोटयोऽस्य शतकोटिः । स्वरति स्वरुः, शॄस्वृति ( उ० १० ) उः, शोभनान्यरूंषि धारा अस्येति सान्तो वा । शं विद्यतेऽस्य शंवः, कंशंभ्यांबभेति ( ५।२।१३८ / १९४४ ) वः । दम्नोति खेदयति दम्भोलिः । अश्नाति शैलानशनिः, न शनैर्याति वा । व्याधामोऽपि ॥ ४७ ॥

2 The car of *Indra*.
1 A divine sage.
2 The council of gods.
3 The food of the gods.
4 The river of heaven.
5 The mountain *Sumeru*.
1 Five celestial trees.
2 Sanat-kumāra.
6 The *Aśvins*.

४८ व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥

स्यात् सुधर्मा देवसभा, पीयूषममृतं सुधा ।

४९ मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ॥

मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ।

५० पञ्चैते देवतरवो मन्दारः पारिजातकः ॥

संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।

५१ सनत्कुमारो वैधात्रः, स्ववैंद्यावश्विनीसुतौ ॥

नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ ।

---

व्योम्नि यान्त्यनेन व्योमयानम् । विमान्ति वर्तन्तेस्मिन्देवा विमानम् । नारं नरसमूहं द्यति भिनत्ति कलहैर्नारदः । आद्यशब्दाद्देवलादयः । सुराश्च ते ब्रह्मादिपुत्रत्वादृषयश्च, षष्ठीसमासो वा । सुष्ठु धर्मोऽस्यां सुधर्मा, यल्लक्ष्यं—सुधर्मानवमां पुरीं ( सभां ) ( १७.२७ रघु० ), धर्मादनिच् केवलात् ( $\frac{५।४।१२४}{८६३}$ )। सह भान्त्यस्यां सभा स्थानगृहम् । पीयते पीयूषं, पीयेरूषन् ( उ० ५१६ )। नास्ति मृतमत्रामृतम् । सुष्ठु धीयते सुधा, धेट् पाने । समुद्रनवनीतं देश्याम् ॥ ४८ ॥ मन्दमकत्यवश्यं मन्दाकिनी, अक अग कुटिलायां गतौ । सिद्धसिन्धुश्च । गङ्गामात्रस्य नामानि च वक्ष्यामः। मिनोति क्षिपत्युच्चत्वाज्ज्योतींषि मेरुः । सुमेरुरभिन्नार्थः, इन्द्रमहेन्द्रवत् । हेम्नोद्रिर्हेमाद्रिः । रत्नानि सानावस्य रत्नसानुः ॥ ४९ ॥ मन्दा आरा धारा अस्य सरलत्वान्मन्दारः । पारिणः पारवतोऽब्धेर्जातः पारिजातकः । संतन्यन्तेस्मिन्पुष्पाणि संतानः । कल्पवृक्षः संकल्पपूरणात् । हरेरिन्द्रस्य चन्दनं, कषे पीतं वा ॥५०॥ सनन्नित्यं कुमारः । सनात्कुमारोपि । विधातुरपत्यं वैधात्रः । वैद्यसंहिताप्रणेतृत्वादत्रोक्तः । न—असत्यावसाधू नासत्यौ, नभ्राण्नपादिति ( $\frac{६।३।७५}{७५५९}$ ) नञ् प्रकृत्या । अश्विनौ सदश्वाधिरूढौ । दस्यतो हरतो रोगान्दस्रौ । अश्विन्या अपत्यं- ढकि—आश्विनेयौ । उभाविति द्वित्वादेकवचनाभावः । भागुरिस्त्वाह—नासत्यदस्रौ यमजावर्कजावश्विनौ यमौ,

2 Nymphs ५२ स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशी-मुखाः ॥
2 Celestial musicians. हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ।

34 Fire. ५३ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः ॥
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ।

५४ बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ॥
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ।

---

नासत्यसहितौ दस्राविति व्याख्येयं, न त्वेको नासत्योन्यो दस्रः ॥ ५१ ॥ घृताची मेनका रम्भा–उर्वशी च तिलोत्तमा। सुकेशी मञ्जुघोषाद्याः कथ्यन्तेप्सरसो बुधैः। अद्भ्यः सृता अप्सरस इत्येकापि शब्दशक्तिस्वाभाव्यात्, अप्सरा इत्यपि दर्शनात् प्रायिकं बहुत्वम्। ऊरू अश्नुते नारायणस्योरूद्भवत्वादुर्वशी, पृषोदरादित्वात् ($\frac{६।३।१०९}{१०३४}$) ह्रस्वः, यल्लक्ष्यं–ऊरुद्भवा नरसखस्य मुनेः सुरस्त्रीति (विक्र० १-४) मुखशब्दाद्रम्भादयः। हाहा एको हूहूरन्यः, एकं नामेत्येके, गन्धर्वौ च हाहा हूहूरिति तु लक्ष्यम्। आलापनिकानुकारात्पुंस्येतौ, अव्ययाविति श्रीभोजः। आद्यशब्दात्तुम्बुरुमुखा गन्धर्वा देवगायनाः ॥ ५२ ॥ अङ्गत्यूर्ध्वं यात्यग्निः। विश्वानरस्यापत्यं वैश्वानरः, विदादित्वादञ् ($\frac{४।१।१०४}{११०६}$)। वहति हव्यं वह्निः। वीतयोश्वा होत्रं हव्यमस्येत्यागमः, वीतिरशनमिति प्राच्याः। धनं जयति धनंजयः, संज्ञायां भृतृवृजीति ($\frac{३।२।४६}{२९६३}$) खच्। उदकनामान्युत्तराण्येकशतमिति (निरुक्तं २-७-२४), कृपीटस्याम्भसो योनिर्धूमजत्वान्मेघानां, अग्नौ प्रास्ताहुतिः सम्यगिति च (मनु० ३-७६), कृपीटं योनिरस्येत्येके, यदाहुः—अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् (मनु० ९-३२१)। ज्वलति ज्वलनः, जुचङ्क्रम्येति ($\frac{३।२।१५०}{३१३०}$) युच्। जाता वेदा अस्माज्जातवेदाः, जाते जाते विद्यते वा। तनूं न पातयतीति तनूनपात्, देहधर्तृत्वात्, नभ्राण्नपादिति ($\frac{६।३।७५}{७५५९}$) नञ् प्रकृत्या ॥ ५३ ॥ बर्हिः शुष्मेति व्यस्तं समस्तं वा नाम, बर्हिर्दर्भः शुष्म बलमस्येति, बर्हति वर्धते बर्हिः, यथा बर्हिर्मुखा देवाः। शुष्यन्त्यनेन शुष्मा, शल्लक्ष्यम्—शुष्मणि प्रणयनाभिसंस्थि (स्कृ)ते (शिशु० ?)। बर्हिरुत्थ इत्यमरमाला, यथा–दशां बर्हणो बर्हिरुत्थः (बा० रा०)। कृष्णो धूमो वर्त्मास्य (कृष्णवर्त्मा)। शोचींषि ज्वालाः केशा अस्य शोचिष्केशः। उषसि रात्रौ बुध्यते प्रकाशते—उषर्बुधः, अहरादीनांपत्यादिषु (वा० $\frac{८।२।६९}{१७२}$) इति रेफः। आशेतेत्रेत्याशयमाधारमश्नातीत्याशयाशः, आश्रयाश इत्येके। बृहतो भानवो रश्मयोस्य बृहद्भानुः। कृशयति कृशानुः, कृशोप्यनिति वर्ध[ वर्त ]-

५५ रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ॥
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ।
५६ सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ॥
3 Submarine fire. — शुचिरप्पित्त, मौर्वस्तु वाडवो वडवानलः ।
5 Flame. — ५७ वह्नेर्द्वयोरज्वाल-कीलावर्चिर्हेतिः शिखा स्त्रियाम् ॥
2 A spark. 2 A burn. — त्रिषु स्फुलिङ्गोऽग्निकणः, संतापः संज्वरः समौ ।
1 Meteor. 5 Ash. — ‘ उल्का स्यान् निर्गतज्वाला, भूतिर्भसित-भस्मनी ॥
3 Forest fire. — क्षारो रक्षा च, दावस्तु दवो वनहुताशनः’ ।
14 Yama. — ५८ धर्मराजः पितृपतिः समवर्ती परेतराट् ॥
कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ।

---

ते वा । पुनाति पावकः । अनित्यनेन लोक इत्यनलः ॥ ५४ ॥ रोहिताख्यो मृगोश्वो वाहनमनस्येति रोहिताश्वः, यदि वा रोहिता लोहिता अश्वा अस्येति । वायुः सखानुचरो[ वा ]स्य वायुसखः । आशोष्टुमिच्छत्याशुशुक्षणिः, आङिशुषेःसनश्छन्दसि ( उ० १६८ ) इत्यनिः । हिरण्यं रेतोस्य हिरण्यरेताः, यत्स्मृ[ च्छ्रु ]तिः—अग्नेरपत्यं प्रथमं सुवर्णमिति । हव्यं वाहयति देवान्नयति हव्यवाहनः, हव्य ( कव्य) पुरीषपुरीष्येषु ल्युट्, हव्येऽवन्तः पादम् । ( ३।२।६५/३४११, ३।२।६६/३४१२ ) ॥ ५५ ॥ दाम्यति शाम्यति विनमत्यन्नं दमुनाः, औणादिक उनस्, दमूना इत्येके, दमेरूनसिः (उ० ६८४) । शुक्रं तेजोंस्त्यस्य शुक्रः, अर्शआदित्वादच् (५।२।१२७/२९३३)। विभैव वसु धनमस्य विभावसुः । शुचिः शोधकत्वात् । अपां पित्तं सारं धूमयोनित्वादप्पित्तम् । उदर्चिश्च । क्षारस्तु भसितं भस्मेति वाच्यम् । उर्वस्यापत्यमौर्वः, वरुणभयान्मात्रा–ऊर्वोर्गोपितत्वादित्येके । वडवामुखेऽनलः वडवानलः । शाकपार्थिवादिसमासः । वाडवोश्वमुखत्वात् ॥ ५६ ॥ ज्वलति ज्वालः ( ज्वाला वा ), ज्वलितिकसन्तेभ्योणः ( ३।१।१४०/२९०२ )। ( कीलः ) कील बन्धे । प्रायेणार्चिः स्त्री, ज्वाला भासो न पुंस्यर्चिरिति हि वक्ष्यते, अर्च्यतेर्चिः । हिनोति हेतिः । शिनोति शेते वा शिखा । स्फुलति चलति स्फुलिङ्गः, जातावपि न ङीप् कन्दरावत् । संतापयति संतापः । संज्वरयति संज्वरः ॥ ५७ ॥ धर्मस्य राजा धर्मराजः । समवर्ती रिपौ मित्रे च समवर्तनात् । परेतराट् प्रेताधिपः । कृतोन्तो विनाशोनेन कृतान्तः । शमयतीति शमनः । यमेन राजते यमराट् । यमयतीति यमः, यमलजातत्वाद्वा ॥ ५८ ॥

५९ कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ॥

15 A giant or ghost.

राक्षसः कोणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ।

६० रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः ॥

यातुधानः पुण्यजनो नैर्ऋतो यातु-रक्षसी ।

5 Varuna.

६१ प्रचेता वरुणः पाशी यादसांपतिरप्पतिः ॥

20 Air or wind.

श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ।

६२ पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः ॥

समीर-मारुत-मरुज-जगत्प्राण-समीरणाः ।

---

कलयत्यायुः कालः । श्राद्धदेवः पितृपतित्वात्, श्राद्धे देवत्वाद्वा । यद्वा विवस्वदपत्यसामान्यान्मनुवतु यद्दुर्गः – श्राद्धे देवोर्कजो मनुः । अन्तं करोतीति, अन्तयत्यन्तकः, ण्वुल् । रक्ष एव राक्षसः, स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेपीति पुंस्त्वम् । कुणपमत्ति कौणपः, शेषे (४।२।९२/१३१२) इत्यण् । क्रव्यमाममांसमत्ति (क्रव्याद्), क्रव्येचेति (३।२।६९/२९७८) क्विप् (विट्) अण् च । अस्रं रक्तं पिबत्यस्रपः, आतोनुपसर्गेकः (३।२।३/२९१५), न श्रपयति क्रव्यात्त्वादश्रप इत्येके । आशृणाति हिनस्त्याशरः ॥ ५९ ॥ रात्रौ चरतीति रात्रिंचरः, चरेष्टः (३।२।१६/२९३०), रात्रेःकृतिविभाषा (६।३।७२/१००८) इति पक्षे नुम् । कर्बुरो वर्णेन, कर्ब हिंसायां वा । निकषा रक्षसां मातेति [ नाम ] माला, अतो नैकषेयभ्रान्त्याकैकसेयमाहुः । यातूनि यातना धीयन्तेस्मिन् यातुधानः । पुण्यजनो विपरीतलक्षणया । निर्ऋतेर्दिक्पालस्यापत्यं नैर्ऋतः । यातयति व्यथयतीति यातुशब्दो भीमवत् । रक्षन्त्यस्माद्रक्षः । विथुरोपि । कीनाशो नानार्थे ॥ ६० ॥ प्रचेतयते प्रचेताः, असुन् । वृणोति वरुणः । यादसां जलचराणां पतिः, यादःपतिरिति वाच्ये पक्षे वाक्याभ्यनुज्ञानम् । अपां पतिरप्पतिः । श्वसन्त्यनेन श्वसनः । स्पृशति स्पर्शनः । वाति वायुः, कृवापाजीत्युण् (उ० १) । मातरि खे श्वसति मातरिश्वा ॥ ६१ ॥ पृषन्मृगविशेषोश्वोस्य पृषदश्वः, पृषन्त्यम्बुकणाः सन्त्यश्वा अस्येत्येके । गन्धस्य वहः । अकारादनुपपदात्कर्मोपपदो (भवति) विप्रतिषेधेन इत्यस्य प्रायिकत्वात्पक्षे कर्मण्यणि (३।२।१/२९१३) गन्धवाहः । अनन्त्यनेनानिलः, न निलति वा, णिल् गहने । समीरयतीत्यचि चलनशब्दार्थेति (३।२।१४८/३१२८) युचि च समीरसमीरणौ, समेति समि(मी)र इत्यप्येकदेशविकृतस्यानन्यत्वात् । म्रियन्तेनेन मरुत् । मरुदेव मारुतः, स्वार्थे–अण् ॥ ६२ ॥

६३ नभस्वद्-वात-पवन-पवमान-प्रभञ्जनाः ॥

(2 Whirlwind.) ‘ प्रकम्पनो महावातो, झञ्झावातः सवृष्टिकः ।’ (1 Storm.)

(5 Air inhaled. &c.) प्राणोऽपानः समानश्चोदान-व्यानौ च वायवः ॥

(5 Speed or velocity.) ६४ शरीरस्था इमे, रंहस्तरसी तु रयः स्यदः ।

(11 Quick, or swiftly.) जवो, ऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ॥

६५ सत्वरं चपलं तूर्णमविलम्बितमाशु च ।

(9 Eternal or continually.) सततेऽनारताऽश्रान्त-संतताऽविरताऽनिशम् ॥

(14 Much or excessive. i) ६६ नित्याऽनवरताऽजस्रमप्यथाऽतिशयो भरः ।

अतिवेल-भृशाऽत्यर्थाऽतिमात्रोद्गाढ-निर्भरम् ॥

---

नभोस्यास्तीति नभस्वान्, तसौमत्वर्थे (१।४।१९/१८९६) इति भसंज्ञा । अतः पदकार्यं भत्वं न भवति ! पवते पवनः, युच् । तथा पवमानः, पूङ्यजोः शानन् (३।२।१२८/३१७८) । प्रभनक्ति प्रभञ्जनः । प्रकम्पनो महाबलश्च । वृष्ट्याकुलश्चण्डस्तु झञ्झामरुत् । प्रसरणेन-अपसरणेन-आसमन्तात्-ऊर्ध्वं-व्याप्त्या च-अनित्यनेनेति, घञ् । आनयतेर्डान्तस्यैतानि रूपाणीति योगशास्त्रम् । एते शरीरे व्यापका अपि नियतस्थानस्थाः, यदाहुः-“हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः” ॥६३॥ वायोर्धर्मानाह । रहत्यनेन रंहः । तरन्त्यनेन तरः, असुन् । रिणाति रयते वाऽनेन रयः, अच् । स्यन्दतेऽनेन स्यदः, स्यदो जव इति (६।४।२८/३९८६) साधुः । जवनं जवः. जुङ् गतौ, ऋदोरप् (३।३।५७/३२३२) । वाजोऽपि । वेगो नानार्थे । शिङ्घति व्याप्नोति शीघ्रम् । त्वरते स्म त्वरितं तूर्णं च, विभाषाभावादिकर्मणोः (७।२।१७/३०५४) इतीट्, ज्वरत्वरेति (६।४।२०/२६५४) उपधाया ऊठ् । लङ्घ्यते लघु । क्षिपति क्षिप्रम् । अरमव्ययं, अर्तेरचि वा नामेत्यन्ये, यच्छाश्वतः-अरमङ्गेरथाङ्गस्य शीघ्रशीघ्रगयोरपि (५८५) । द्रवति स्म द्रुतम् ॥ ६४ ॥ सह त्वरया वर्तते सत्वरम् । न विलम्बते स्माविलम्बितम् । अश्नुत आशु, कृवापाजीत्युण् (उ० १) । सवेगगतिवचनो जवः धर्मवचनास्तु शीघ्रादय इति-अर्थभेदः । सदागतिप्रस्तावादाह । संतन्यते स्म सततं, समोवाहिततयोरिति (का०) पक्षे मलुक् । आरतविरतावरतशब्दा विरामार्थास्ततो नञ्समासः । न श्राम्यति स्माश्रान्तम् । अविद्यमाना निशात्रानिशम्, सा हि विरतिस्थानम् ॥ ६५ ॥ नियतं भवं नित्यम् । न जस्यति तच्छीलमजस्रं, नमिकम्पीति (३।२।१६७/३१४७) रः । [ संसक्तमासक्तं च । ] अतिशेते जयत्यनेना-

६७ तीव्रैकान्त-नितान्तानि गाढ-बाढ-दृढानि च ।
क्लीबे शीघ्राऽऽद्य-सत्त्वे स्यात्, त्रिष्वेषां सत्त्व-गामि यत् ॥

17 Kubéra. ६८ कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥

६९ किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविल-श्रीद-पुण्यजनेश्वराः ॥

1 The garden of *Kube'ra.* (his son) ७० अस्योद्यानं चैत्ररथं, पुत्रस्तु नलकूबरः । 1 *Nalakūvara*
कैलासः स्थानमलका पूर्विमानं तु पुष्पकम् ॥ 1 *Kailasa.* 1 *Kube'ra's* city. 1 Vehicle.

---

तिशयः । भरः पूर्णता, भृ भरणे, ऋदोरप् ( ३।३।५७/३२३२ ) । अतिक्रान्तं वेलामर्थं मात्रां च । बिभर्ति भृशम् । उद्गाहते स्मोद्गाढम् । निःशेषेण भरोऽत्र निर्भरम् ॥ ६६ ॥ तीवति तीव्रं, ताव स्थौल्ये, रक् । एको निश्चितोन्तोत्रैकान्तम् नितास्यति स्म नितान्तम् । बाहते बाढम्, क्षुब्धस्वान्तध्वान्तेति ( ७।२।१८/३०५८ ) बाढं भृशे साधु । दृढःस्थूलबलयोरिती ( ७।२।२०/३०६० ) दृढं बलवति साधु । अतिमर्यादं दरं च । सततमविच्छेदः प्रकर्षस्त्वतिशय इत्यर्थभेदः । असत्त्वे गुणक्रियाविशेषणत्वाद्-द्रव्यवृत्तित्वे सति शीघ्राद्या नपुंसके, यथा–भृशं मूर्खः, भृशं याति । एतन्मध्याद्यत्स-त्त्वगामि द्रव्यवृत्ति तत्त्रिलिङ्गं, यथा–शीघ्रा स्त्री, शीघ्रोश्वः, शीघ्रं कुलम् । सत्त्वगा-मीति किं–भरोयं, गुणातिशयोयम् ॥ ६७ ॥ कुत्सितं वे–बेरं देहोस्येति कुवे-बे-रः, कुष्ठित्वात् । त्र्यम्बकस्य सखा त्र्यंबकसखः, राजाहःसखिभ्यष्टच् ( ५।४।९१/७८८ ) । मनुष्यस्येव धर्मः श्मश्रुलत्वादिरस्य मनुष्यधर्मा, धर्मादनिच्केवलात् ( ५।४।१२४/८६३ ) । धनं दयते रक्षति धनदः, एवं श्रीदः । राज्ञां यक्षाणां राजा राजराजः ॥ ६८ ॥ विश्रवसोपत्यं वैश्रवणः, विश्रवसा विग्रहो विश्रवणेन वृत्तिरविरविकन्यायेन, शिवा-दिभ्योऽण् ( ४।१।११२/११२५ ) पुलस्तेरपत्यं गोत्रं पौलस्त्यः । नरो वाहनमस्य नर-वाहनः, वाहनमाहितात् ( ८।४।८/१०५२ ) इत्यनेन नरस्यानाहितवाचित्वाद्–णत्वं नास्ति, पूर्वपदात्संज्ञायां ( ८।४।३/८५७ ) इत्यपि नास्ति, क्षुभ्नादित्वात् ( ८।४।३९/७०९२ ) । किंनरादिस्वाम्येपि जात्या यक्षः, यजेर्यक्षेर्वा रूपम् । एकपिङ्गः पिङ्गलैक-नेत्रत्वात्, अतो भागुरिणा हर्यक्ष उक्तः । इडविडा मातास्येति, ऐलविलोपि डलयोरेकत्वस्मरणात् ॥ ६९ ॥ अस्येति प्रत्येकं संबध्यते । उद्यान्त्यस्मिन्नुद्यानम् । चित्ररथेन गन्धर्वराजेन निर्वृत्तं चैत्ररथम् । नडः कूबरं रथावयवोऽस्य नडकूबरः । केऊयोर्जलभूम्योरास्ते, के ( जले ) लसनमस्य वा कैलासः स्फटिकस्तस्यायं स्फटि-कोऽद्रिः ( कैलासः ) । अलत्यलका, अल भूषणे, क्षिपकादित्वात् ( वा० ४५३०/४६४ )

७१ स्यात् किन्नरः किंपुरुषस्तुरङ्गवदनो मयुः । 4 His attendants
निधिर्नाशेवधिर्भेदाः पद्म-शङ्खाऽऽदयो निधेः ॥

...ous

इति स्वर्ग-वर्गः १, अत्र मूलश्लोकाः ६८॥, "क्षेपकश्लोकाः ५" ॥

---

## अथ व्योमदिग्वर्गः २.

...sky ...mos-...re.

१ द्यो·दिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।
नभो ऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥
२ वियद् विष्णुपदं वा तु पुंस्याकाश-विहायसी ।
विहायसो ऽपि नाको ऽपि द्युरपि स्यात् तदव्ययम् ॥
'तारापथो ऽन्तरिक्षं च मेघाध्वा च महाबिलम्' ।

...Space, ...gion or ...uarters.

इति व्योम-वर्गः २½, अत्र मूलश्लोकौ १½, " क्षेपकश्लो० १ "

---

इत्वाभावः । पुष्पमिव पुष्पकम्, इवेप्रतिकृतौ ( ५।३।९६ / २०५६ ) कन् ॥ ७० ॥ किंचिन्नरो-श्वमुखत्वात्किंनरः, कुत्सितो नरो वा, किंक्षेपे ( २।१।६४ / ७४३ ) इति समासः । मयते मयुः । नियतं धीयते निधिः, किः । शेव्यते शेवं स्थाप्यधनं धीयतेस्मिञ्शेवधिः । ना पुंलिङ्ग इति काकाक्षिवत् । उक्तं च-महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥ ७१ ॥ इति स्वर्वर्गः । १ ।

---

न भ्राजतेऽभ्रम्, डः । व्यवति व्योम, ज्वरत्वरस्रिव्यवीति ( ६।४।२० / २६५४ ) ऊत्वम् । पुष्कं वारि राति (व्यवति) पुष्करम् । अम्बते शब्दायतेऽम्बरम् । न बभस्ति भाति नभः । अन्तर्ऋक्षाण्यत्रान्तरिक्षम्, पृषोदरादित्वात् ( ६।३।१०९ / १०३४ ) इत्वम्, द्यावापृथिव्योरन्तरीक्ष्यते वा, छान्दसमित्वम् । गच्छन्त्यनेन गगनं [ वर्त्मविकारो गमेर्गश्चेति ( उ० २३५ ) गः ] । नास्त्यन्तोस्यानन्तम् । खन्यते खम् ॥ १ ॥ वियच्छति विरमति वियत् । विष्णोः पदं क्रमोऽत्र विष्णुपदम् । आकाशन्ते सूर्यादयो-त्राकाशम्, न काशते वा, छान्दसो दीर्घः । विजहाति सर्वं विहायः । तारापथो मेघाध्वा च । महाबिलं देश्याम् । दिशत्यवकाशं दिक्, ऋत्विग्दधृक्स्रग्दिगुष्णिगिति ( ३।२।५९ / ३७३ ) साधुः । कं स्कुभ्नाति विस्तारयति ककुप् । काशते काष्ठा ।

## अथ दिग्-वर्गः

1 Several quarters.

दिशस्तु ककुभःकाष्ठा आशाश्च हरितश्च ताः ॥

३ प्राच्यवाची-प्रतीच्यस्ताः पूर्व-दक्षिण-पश्चिमाः ।

1 Relating to quarters Relating to each quarter.

उत्तरा दिगुदीची स्याद्, दिश्यं तु त्रिषु दिग्भवे ॥

'अवाग्भवमवाचीनमुदीचीनमुदग्भवम् ।

प्रत्यग्भवं प्रतीचीनं प्राचीनं प्राग्भवं त्रिषु' ॥

1 The lords of quarters and points.

४ इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।

कुबेर ईशः पतयः पूर्वाऽऽदीनां दिशां क्रमात् ॥

'रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः ।

बुधो बृहस्पतिश्चेति दिशां चैव तथा ग्रहाः' ॥

1 Elephants, at the points.

५ ऐरावतः पुण्डरीको वामनः कुमुदो ऽञ्जनः ।

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्-गजाः ॥

1 Their females.

'करिण्यो ऽभ्रमु-कपिला-पिङ्गलाऽनुपमाः क्रमात् ।

ताम्रकर्णी शुभ्रदन्ती चाऽङ्गना चाऽञ्जनावती ॥'

2 Intermediate point.

६ क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ।

2 Included space.

अभ्यन्तरं त्वन्तरालं, चक्रवालं तु मण्डलम् ॥

2 The sensible horizon.

---

अश्नुते आशा । हरन्त्यनया हरित् ॥ २ ॥ यथासंख्येन प्राची पूर्वा, अवाची दक्षिणा, प्रतीची पश्चिमा, सर्वनाम्नोवृत्तिमात्रे पूर्वपदस्य पुंवद्भावः ( $\frac{१३७६}{७२८.२१४७}$ वा० ) प्राग्मध्ये पश्चाच्चार्कौञ्चत्यस्याम्, अवो मध्यार्थे । अपाचीति कात्यः, जपादित्वात्पक्षे वत्वं च । भवार्थे प्राचीनाद्याः । उत्तरत्यतिशयेनोच्चैर्वा– उत्तरा । उत्तरमञ्चत्यकौस्यामुदीची । ( दिश्यं ) दिगादिभ्योयत् ( $\frac{४।३।५४}{१४२९}$ ) ॥ ३ ॥ विदिगपि प्रसिद्ध्या दिक् । [ एते क्रमात्पूर्वादीनां दिशां विदिशां च पतयः ] । रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः । बुधो बृहस्पतिश्चैव दिशामीशास्तथा ग्रहाः ॥ ४ ॥ दिशां धारका गजा दिग्गजाः क्रमात्, ऐरावतः पुण्डरीकः कुमुदोञ्जनवामना इति भागुरिः क्रमं व्यत्यस्तवान् । मालापि –ऐरावतः सुप्रतीक इति । पुण्डरीकादिवर्णाकृतिभ्यां संज्ञा एताः । शोभनानि प्रतीकान्यङ्गान्यस्य सुप्रतीकः । करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् । ताम्रकर्णी शुभ्रदन्ती चाङ्गना [ वामना ] चाञ्जनावती ॥ ५ ॥ दिशोरिदमपदिशम्, विभक्त्यर्थेऽव्ययीभावः, अव्ययीभावेशरत्प्रभृतिभ्यः

15 A cloud. ७ अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ।
धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ॥
८ घन-जीमूत-मुदिर-जलमुग्-धूमयोनयः ।
2 A sucession of clouds. कादम्बिनी मेघमाला, त्रिषु मेघ-भवेऽभ्रियम् ॥ 1 Belonging to clouds.
4 The rattling of thunder. ९ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च ।
10 Lightning. शम्पा शतह्रदा-ह्रादिन्यैरावत्यः क्षणप्रभा ॥
2 A clap of thunder. १० तडित् सौदामिनी विद्युच्चञ्चला-चपला अपि । 2 A flash of lightning.
स्फूर्जथुर्वज्रनिर्घोषो, मेघज्योतिरिरम्मदः ॥

---

( ५।४।१०७/६७७ ) समासान्तः, अव्ययीभावश्च ( २।४।१८/६५९ ) इति नपुंसका ः र र त्वे । विशिष्टा दिग्विदिक्, उभयव्यपदेशात्, यदाहुःयान्यासामन्तरालानि विदिशः प्रदिशश्च ताः ( अमरमाला ) । अन्तरमवकाशमालात्यन्तरालम् । चक्राकारेण वलते चक्रवालं, वाडते वा, वाडृ अह्लाव्ये । मण्ड[ ण्ड्य ]ते मण्डलम् । सूत्रद्वये दिशामित्यनुवर्तयन्ति प्रसङ्गात्सामान्येनेति सभ्यः ॥ ६ ॥ अभ्रत्यपो राति वाभ्रम्, अभ्र गत्यर्थः, न भ्रश्यन्त्यापोस्मादित्येके, यदुक्तं—न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः ( पुराणं ) । मेहति सिञ्चति मेघः, न्यङ्क्वादित्वाद् ( ७।३।५३/२८६४ ) घः । ( स्तनयित्नुः ) स्तनेश्चौरादिकात् स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुच् (उ० ३०९) । बलाकाभिर्हीयते बलाहकः, वारिवाहको वा ॥ ७ ॥ हन्यते वायुना घनः, मूर्तौघनः ( ३।३।७७/३२५४ ) इति साधुः । जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः । मोदन्तेऽनेन मुदिरः । धूमो योनिरस्य धूमयोनिः । कमाददते कादम्बा मेघास्ते सन्त्यस्यां कादम्बिनी, कदम्बे विकाशो वास्त्यस्याम् । मेघिका देश्याम् । ( अभ्रियं ) समुद्राभ्राद्घः ( ४।४।११८/३४६४ ) छान्दसत्वमतन्त्रम् ॥ ८ ॥ आदिशब्दाद् ध्वनितगर्जादि । शं पिबति शम्पा, शम्बेति प्राच्याः—शम्ब( य )ति नायनं तेज इति व्याख्यन् । शतह्रदोर्चिर्विद्यतेस्याः शतह्रदा, वाडवज्योतिष्ट्वात् । ऐरावतोभ्रगो नागस्तस्य स्त्री—ऐरावती । क्षणप्रभा—अचिरद्युतिः ॥ ९ ॥ ताडयति तडित्, ताडेर्णिलुक्च (उ० ९८)। सुदाम्नाद्रिणैकदिक्सौदामनी, तेनैकदिक् ( ४।३।११२/१४९२ ) इत्यण् । विद्योतते विद्युत् । चटुला [ वज्रज्वाला च ] देश्याम् । स्फूर्जनं स्फूर्जथुः, ट्वितोथुच् ( ३।३।८९/३२६७ ) । निष्पेषः संघट्टोत्थ शब्दः, अशन्याघात इत्येके । एतेन वज्राशन्योस्तडिद्भेद[ भव ]त्वं मन्यते । इरयाम्भसा माद्यति—इरंमदः, उग्रपश्येरंमदेति ( ३।२।३७/२९५२ ) साधुः । धूमज्योतिः सलिलमरुतां संघ एव मेघस्तत्रत्यं ज्योतिराविर्भवन्मेघज्योतिरित्युच्यते ।

2 A rainbow. **११** इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् । 1 Indra's bow unbent.

2 Rain. 2 Drought. वृष्टिर्वर्षं, तद्-विघाते ऽवग्राहाऽवग्रहौ समौ ॥

2 A hard shower. 2 Thin rain. **१२** धारासंपात आसारः, शीकरो ऽम्बु-कणाः स्मृताः ।

2 Hail. वर्षोपलस्तु करका, मेघच्छन्ने ऽह्नि दुर्दिनम् ॥ 1 A cloudy day

8 Covering or disappearance. **१३** अन्तर्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् ।

अपिधान-तिरोधान-पिधानाऽऽच्छादनानि च ॥

20 The moon. **१४** हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ।

विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ॥

1 A digit. **१५** अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः ।

द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ॥

---

विद्युदाख्यं वडवानलज्योतिरेव न मेघज्योतिस्तेन शम्पा शतह्रदेत्यादिशब्दा अभिलषिता इति ] ॥ १० ॥ मेघप्रतिफलिता हि सूर्यरश्मयो धनुराकारेण दृश्यन्ते तदेवेन्द्रधनुरुत्पाते, ऋज्ववक्रं रोहितम्, रोहः संजातोऽस्येति, लोहितत्वाद्वा, ऋत्यकः ( ६।१।१२८ / ९२ ) इति प्रकृतिभावः । वर्षम्, अज्विधौ भयादीनामुपसंख्यानं-नपुंसकेक्तादिनिवृत्त्यर्थम् (वा० २।१९७।१८ / ३२३१ )। तद्विघाते तस्य वर्षस्य विघाते निरोधे ( अवग्राहः अवग्रहः ), अवेग्रहोवर्षप्रतिबन्धइति ( ३।३।५१ / ३२२६ ) घञ् (विभाषा) ॥ ११ ॥ बद्धधाराणां संततं पतनं धारासंपातः । आसरणमासारः, सृस्थिरे ( ३।३।१७ / ३१८३ ) इति घञ् भावे । शीकते सिञ्चति शीकरः । सृता वातेरिताः, यत्कात्यः—आसारोवेगवद्वर्षं वातास्तं वारि शीकरः । कृणोति हिनस्ति कीर्यते वा करका, क्षिपकादिः ( वा० ७।३।४५ / ४६४ ), कमण्डलौ च करक इति पुंस्यपि वक्ष्यति । अहरत्राहर्निशोपलक्षणम् । अह्नि मेघेन च्छन्नमाच्छादनमिति व्यधिकरणे सप्तम्यौ वा, यद्भागुरिः—दुर्दिनं ह्यन्धकारेऽब्दैः । वार्दलं देश्याम् ॥ १२ ॥ अन्तर्धानमन्तर्धा, अन्तशब्दस्याङ्किविधिणत्वेषूपसर्गत्वात् ( ११४१ / २२३१ वा० ) आतश्चोपसर्गे ( ३।१।१३६ / २८९८ ) इत्यङ् । ( अन्तर्धिः ) उपसर्गेघोःकिः ( ३।३।९२ / ३२७० )। वष्टिभागुरिरल्लोपमिति ( का० ) पक्षे पिधानम् । तिरोन्तर्धाविति ( १।४।७१ / ७७२ ) गतित्वात्समासः ॥ १३ ॥ आह्लादनाच्चन्द्रश्चासौ मिमीते कालं मस्यति परिणमते वा माश्च चन्द्रमाः । मा अप्युच्यते सत्यभामा भामेतिवत् । उनत्तीन्दुः, उन्देरिच्चादेः (उ० १२ ) । विधयन्त्येनं सुरा विधुः, धेट् पाने । शुभ्रांशुः सितकरः । ओषधीरीष्टआप्यायकत्वा-दोषधीशः ॥ १४ ॥ अद्भ्यो जातोब्जः । जीवयति जैवातृकः, जीवेरातृकन्वृद्धिश्च(उ० ७९) ।

| | |
|---|---|
| 2 The disk of the sun or moon. | १६ कला तु षोडशो भागो, बिम्बो ऽस्त्री मण्डलं त्रिषु । |
| 4 A part. 1 Half. | भित्तं शकल-खण्डे वा पुंस्यर्द्धो, ऽर्द्धं समेंऽशके ॥ |
| 3 Moon-light. 2 Purity or brightness. | १७ चन्द्रिका कौमुदी ज्योत्स्ना, प्रसादस्तु प्रसन्नता । |
| 6 A spot or mark. | कलङ्काऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ॥ |
| 1 Exquisite beauty. 4 Beauty or splendour. | १८ सुषमा परमा शोभा, शोभा कान्तिर्द्युतिश्छविः । |
| 7 Frost. | १९ अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ॥ |
| 2 Ice and snow. | प्रालेयं मिहिका चा, ऽथ हिमानी हिमसंहतिः । |

---

सूतेऽमृतं सोमः सूयते वा, नवो नवो भवति जायमान इति श्रुतेः । ग्लायति क्षीयते ग्लौः, ग्लानुदिभ्यांडौः (उ० २२२) । (द्विजराजः) यतः सोमो राजा द्विजातीनाम् । क्षपां करोत्युद्द्योतयति क्षपाकरः । सुधामूर्तिः [ सुधाभृतिः ] आत्रेयो रोहिणीश [ सख ] श्च । अमृतनिर्गमः, समुद्रनवनीतं देश्याम् ॥ १५ ॥ चन्द्रस्येति शेषः । षड्भिरधिका दश षोडश, षषउत्वंदतृदशधासूत्तरपदादेःष्टुत्वंच० ( ४००१।२/८११ वा० ), षोडशानां पूरणः, तस्यपूरणेडट् ( ५।२।४८/१८४९ ) । कलयति संख्याति कला बिम्बति भाति बिम्बमाभोगः, सौत्रोयम् । भिद्यते स्म भीत्तं शकले साधुः ( भित्तं-शकलं )। शक्यते भेत्तुं शकलं शकलो वा । खण्ड्यते खण्डे खण्डो वा । खण्डलं भागच्छेदौ च । ऋध्नोति-अर्धोभागो निर्देशात्पुंसि, वाच्यलिङ्ग इत्येके, यट्टीका-खण्डमात्रवृत्तितायामभिधेयलिङ्ग इति । समप्रविभागे त्वर्धं नपुंसकम् । [सामि] दलं नेमोऽपि ॥ १६ ॥ चन्द्रोऽस्त्यस्यां चन्द्रिका । कुमुदानामियं विकाशहेतुत्वात्कौमुदी । ज्योतिरस्त्यस्यां ज्योत्स्ना, ज्योत्स्नातमिस्रेति ( ५।२।११४/१९२१ ) साधुः । प्रसादो नैर्मल्यम् । कल्यते लक्ष्यतेऽनेन कलङ्कः । अकि लक्षणे (अङ्क्यतेनेनाङ्कः)। (लाञ्छनं) लाछि लक्षणे । चहयति चिह्नं, चह परिकल्कने । लाञ्छनसाहचर्याच्चिह्नादि क्लीबे । अभिज्ञानं च ॥ १७ ॥ प्रकृष्टा कान्तिः सुषमा, सुष्ठु समेति, सुषामादित्वात् ( ८।३।९८/१०२२ ) षत्वम् । शोभामात्रे परमा उत्कृष्टा शोभा शोभते काम्यते कान्तिः । छ्यति छिनत्त्यसारं छविः ॥ १८ ॥ अवश्यायतेवश्यायः, श्याद्व्यधेति णः ( ३।१।१४१/२९०३ )। निहियते नीहारः । तुष्यन्त्यनेन तुषारः । तोहत्यर्दयति तुहिनं, तुहिरर्दने । हिनोति वर्धते जलमनेनेति हिमम् । प्रलयादागतं प्रालेयं, केकयमित्त्रयु-

1 Cold or chilness. २० शीतं गुणे, तद्वदर्थाः सुषीमः शिशिरो जडः ॥

7 Cold or frigid. तुषारः शीतलः शीतो हिमः सप्ताऽन्य-लिङ्गकाः ।

2 The polar star. 3 Agastya २१ ध्रुव औत्तानपादिः स्यात्, अगस्त्यः कुम्भसंभवः ।

1 His consort. मैत्रावरुणि, रस्यैव लोपामुद्रा सधर्मिणी ।

6 A star. Asterisms. २२ नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम् ॥ 2 The head of Aries.

2 Stars in the South ern scale. दाक्षायिण्यो ऽश्विनीत्यादि-तारा, अश्वयुगश्विनी ।

---

प्रलयानांयादेरियः ( ७।३।२ / ११४४ )। मेहति मिहिका नीहारः, [ महिकापि ]। नीहाराख्या त्वन्या धूममहिषी। धूमिका च देश्याम्। ( हिमानी ) हिमारण्ययोर्महत्वे ( वा० २४७२ / ५७५ ) ङीषानुक् च ॥१९॥ गुणे जाड्ये शीतं क्लीबे, श्यैङो भावे क्तः ( सू० ), द्रवमूर्तिस्पर्शयोःश्यइति ( ६।१।२४ / ३०२० ) संप्रसारणं, संप्रसारणस्येति ( ६।३।१३९ / १००४ ) दीर्घः। तद्वदर्थाः शीतवत्पर्यायाः अभिधेयलिङ्गाः। सुष्ठु श्यायते सुशीमः। शिनोत्यर्थं श्यायते सुशीमः। शिनोत्यर्थं श्यायते वा शिशिरः। जलति जडः, जल जाड्ये। शीतं लाति शीतलः। ( हिमः ) हिमादेः—अर्शआदित्वादच् ( ५।२।१२७ / १९३३ ) ॥ २० ॥ चन्द्रप्रसङ्गादागतमुक्त्वा प्रस्तुतमाह। ध्रुवति ध्रुवः, कः। उत्तानपादस्यापत्यं, ऋषित्वाद् ऋष्यन्धकेति ( ४।१।११४ / ११२७ ) आणि प्राप्ते, बाह्वादित्वादिञ् ( सू० ४।१।९६ / १०९६ )। अगं विंध्याचलं स्त्यायति स्तम्भितवानगस्त्यः। मित्रावरुणयोरपत्यं मैत्रावरुणिः, ऋषिसमुदायस्यानृषित्वादिञ्, देवताद्वन्द्वेचानङ् ( ७।३।२१ / १२३९ )। पतिशुश्रूषालोपेष्वमुद्रा, न मुदं राति, लोपामुद्रा लोपयति योषितां रूपाभिमानं। समानो धर्मोस्त्यस्याः सधर्मिणी पत्नी ॥ २१ ॥ न क्षरति नक्षत्रं, क्षर गतिहिंसनयोः, भ्राण्नपादिति ( ६।३।७५ / ७५९ ) नञ् प्रकृत्या। ऋषति गच्छति, ऋक्ष्णोति तमो वा—ऋक्षम्। भा विद्यतेस्य भम्। तरन्त्यनया तारा। ( तारका ) स्वार्थे कन्, तारकाज्योतिषीति ( ४५३१ / ४६४ वा० ) इत्वाभावः, क्लीबेपि यच्छाश्वतः—नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च, लक्ष्यं च—द्वित्रैर्व्योम्नि पुराणमौक्तिकघन ( मणि )—च्छायैः स्थितं तारकैः ( विद्धशाल० ४-२० )। अवतेरुडुः, उड गतौ वा। दाक्षायण्योश्विनीत्यादितारा: सप्तविंशतिभानि। दक्षस्यापत्यं दाक्षायणी, अत इञ् ( ४।१।९५ / १०९५ ) अनन्तरापत्येपि द्वैपायनवत्, यञिञोश्चेति ( ४।१।१०१ / ११०३ ) फक्, यद्वा—इतोमनुष्यजातेः ( ४।१।६५ / ५२० ) इत्यत्र—इञ उपसंख्यानाद् ङीष्, कौरव्यमाण्डूकाभ्यांच ( ४।१।१९ / ४७७ ) इति चकारादासुरायणवत् ष्फः—तद्धितः। अश्वाम् युङ्क्तेश्वयुक्, अश्वकर्मण्याम्नात् ॥ २२ ॥

3 Stars in Cancer. २३ राधा विशाखा, पुष्ये तु सिध्य-तिष्यौ, श्रविष्ठया ॥
2 The Dolphin. समा धनिष्ठाः स्युः, प्रोष्ठपदा भाद्रपदाः स्त्रियः ।
2 The wing of Pegasus. २४ मृगशीर्षं मृगशिरस्तस्मिन्नेवाऽऽग्रहायणी ॥ 3 Orion.
1 Stars in his head. इल्वलास्तच्छिरो-देशे तारका निवसन्ति याः ।
9 The planet Jupiter. २५ बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः ॥
जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ।
6 Venus. २६ शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥
5 Mars. अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः ।

---

राध्नोति कार्यं राधा । विशाखति व्याप्नोति विशाखा, शाखृ व्याप्तौ । पुष्यसिध्यौ-नक्षत्रे ( ३।१।११६ / २८६७ ) साधू, पुष्णात्यर्थान्पुष्यः, सिध्यन्त्यनेनार्थाः सिध्यः । त्वेषति तिष्यः, त्विष दीप्तौ, अघ्न्यादिः ( ५५१ उ० ) श्रूयते शुभकर्मणि श्रविष्ठा । दधन्ति धनं करोति धनिष्ठा, श्रविधनिभ्यामिष्ठन् । प्रोष्ठौ सारौ पदावस्याः प्रोष्ठपदा, अर्थग्रहणाद् भद्रपदा, सुप्रातःसुश्वेति ( ५।४।१२० / ८६० ) साधुः, फल्गुनीप्रोष्ठपदानां-चनक्षत्रे ( २।१।६० / ८१९ ) इति वा बहुत्वम् ॥ २३ ॥ मृगस्येव शीर्षं शिरोस्य, खे ताराणां तथावस्थानात्, शीर्षं प्रकृत्यन्तरम् । अग्रे हायनोस्या आग्रहायणी, मार्ग-शीर्षादारभ्य संवत्सरप्रवृत्तेः, आग्रहायण्यश्वत्थाट्ठक् ( ४।२।२२ / १२२४ ) इति निर्देशा-दण् । इन्वका इति पञ्च ताराः, इन्वन्ति प्रीणन्तीन्वकाः, मरुतो देवता इन्वका नक्षत्रमिति श्रुतेः । इल्वलास्तारका इल्वलोसुर इति—उणादौ श्रीभोजदेवो व्याक-रोत् ॥ २४ ॥ [ बृहतां पतिर्बृहस्पतिः ] तद्बृहतोःकरपत्योश्चोरदेवतयोरिति ( ३७१३ / १७७१ वा० ) सुट्तलोपौ । गीर्पतिः—गीष्पतिः, अहरादीनांपत्यादिषु ( ४८५१ / १७२ वा० ) इति वा रेफः, पक्षे कस्कादिदर्शनात् ( ८।३।४८ / १४४ ) षत्वम् । धिषणास्यास्तीति धिषणः । गृणात्युपदिशति गुरुः, कृग्रोरुच ( उ० २४ ) । जीव्यतेनेन मृतसंजीवनीज्ञत्वाज्जीवः । अङ्गिरसोपत्यत्वादाङ्गिरसः । चित्रशिखण्डजः सप्तर्षिजः, समुदायेषु हि वृत्ताः शब्दा ( अवयवेषु वर्तन्ते ) इति । वाचस्पतिः, अलुकि षष्ठ्याःपतिपुत्रेति ( ८।३।५३ / १६३८ ) सत्वम् ॥ २५ ॥ शुक्रो रुद्रस्य शुक्रद्वारेण निर्गतत्वात् । कवेरपत्यं काव्यः, कुर्वादि-भ्योण्यः ( ४।१।१५१ / ११७५ ), कविस्त्वभेदाद्यथा—जमदग्निर्वै पञ्चममवदानमवाद्यत्, चातुर्वर्ण्यादित्यन् ( चतुर्वर्णादीनांस्वार्थउपसंख्यानम् ३०९१ / १७८९ ) इत्येके । वष्टीत्युशना, ऋदुशनइति ( ७।१।९४ / २७६ ) सावनङ् । भृगोरपत्यं भार्गवः । अङ्गानियर्ति पीनत्वादङ्गा-रकः, आरस्तु भौमवत् । कौ जायते कुजः । भूमेरपत्यं भौमः, शिवादित्वादण्

3 Mercury. 5 The ascending node.

२७ रौहिणेयो बुधः सौम्यः, समौ सौरि-शनैश्चरौ ॥ 2 Saturn.
तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः ।

1 Ursa major. Ascension.

२८ सप्तर्षयो मरीच्यत्रि-मुखाश्चित्रशिखण्डिनः ॥
राशीनामुदयो लग्नं, ते तु मेष-वृषाऽऽदयः ।

1 Signs of the Zodiac. 54 The Sun.

२९ सूर-सूर्याऽर्यमाऽऽदित्य-द्वादशात्म-दिवाकराः ॥
भास्करा ऽहस्कर-ब्रध्न-प्रभाकर-विभाकराः ।

३० भास्वद्-विवस्वत्-सप्ताश्व-हरिदश्वोष्णरश्मयः ॥
विकर्तना ऽर्क-मार्तण्ड-मिहिरा ऽरुण-पूषणः ।

---

( ४।१।११२ / १११५ ) वक्रोपि ॥ २६ ॥ रोहिण्या अपत्यम् । सोमः पितापि देवतास्येति, सोमाट्ट्यण् ( ४।२।३० / १२३२ ) । ज्ञश्चान्द्रमसायनिश्च । सूरस्यार्कस्यापत्यं सौरिः, सौरस्तु तस्येदम् ( ६।४।१३ / ३५७ ) इत्यणि । शनिमन्दौपङ्गुकालौ छायापुत्रोसितश्च सः तमस्कारित्वात्तमः, सान्तत्वात्क्लीबे । रहयति भुक्त्वा चन्द्रार्कौ राहुः । स्वर्भाति स्वर्भानुः, पूर्वपदात्संज्ञायां ( ८।४।३ / ८५७ ) न णत्वम् । सिंहिकाया अपत्यं सैंहिकेयः । विधुं तुदति विधुंतुदः, विध्वरुषोस्तुदः ( ३।२।३५ / २९५० ) इति खश् । अभ्रपिशाचो ग्रहकल्लोलश्च देश्याम् । केतुः शिखीति वाच्यम् ॥ २७ ॥ सप्त च ते ऋषयश्च, दिक्संख्येसंज्ञायामिति ( २।१।५० / ७२७ ) द्विगुः । मुखशब्दात्क्रत्वङ्गिरोवसिष्ठपुलस्त्यपुलहाः । चित्रः शिखण्डश्चूडास्त्येषाम् सप्तर्षिरित्येकत्वं रुढेः । ( ते राशयः ) मेषो वृषोथ मिथुनं कर्कटः सिंहकन्यके । तुलाथ वृश्चिको धन्वी मकरः कुम्भमीनकौ ॥ २८ ॥ सुवति सूरः । सूयते सूर्यः, राजसूयसूर्येति ( ३।१।११४ / २८६५ ) साधुः । इयर्ति अर्यमा । अदितेरपत्यमादित्यः । द्वादशात्मानो रूपाण्यस्य ( द्वादशात्मा ) । दिवा दिनं करोति दिवाकरः, दिवाविभाप्रभेति ( ३।२।२१ / २९३५ ) टः । भास्कराहस्करौ कस्कादित्वात् ( ८।३।४८ / १४४ ) ब्रधते ब्रध्नः । भासः सन्त्यस्य भास्वान् ॥२९॥ विवस्तेजोस्यास्तीति विवस्वान्, तसौमत्वर्थइति ( १।४।१९ / १८९६ ) भसंज्ञायां पदकार्यं रुत्वं नास्ति । हरितो नीला अश्वा अस्य ( हरिदश्वः ) । विकृन्तत्यात्मानं विकर्तनः, भ्रमेण तेजःशातनात् । अर्कयति तपत्यर्कः, अर्च्यते वा । मृतण्डस्यापत्यं मार्तण्डः, मृताण्डमजायतेति मार्ताण्डो वा । मेहति मिहिरः, आदित्याज्जायते वृष्टिरिति स्मृतिः ( मनु० ३·७६ ) । अरुणोस्त्यस्यारुणः, वर्णेन वा । पूषति पर्वं ( वर्ध )ते पूषा, इन्हन्पूषार्यम्णांशौ ( ६।४।१२ / ३५६ ), सौच ( ६।४।१३ / ३५७ ) इति नियमा-

३१ द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥
विभावसुर्ग्रहपतिस्त्विषाम्पतिरहर्पतिः ।
३२ भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥
'पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ।
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥
प्रद्योतनो दिवमणिः खद्योतो लोकबान्धवः ।
इनो भगो धामनिधिश्चांऽशुमाल्यब्जिनीपतिः' ॥
(1 Three of the sun's attendants) माठरः पिङ्गलो दण्डश्चण्डांशो पारिपार्श्वकाः ।
(5 The dawn.) ३३ सूरसूतो ऽरुणो ऽनूरुः काश्यपिर्गरुडाग्रजः ॥
(4 Halo.) परिवेषस्तु परिधिरुपसूर्यक-मण्डले ।
(11 A ray.) ३४ किरणोस्र-मयूखांऽशु-गभस्ति-घृणि-रश्मयः ॥
भानुः करो मरीचिः स्त्री-पुंसयोर्दीधितिः स्त्रियाम् ।

---

दीर्घाभावः ॥ ३० ॥ दिवि मणिरिव द्युमणिः, अत एवाम्बरमणिर्गगनमाणिक्यादयोपि । तरन्त्यनेन तमस्तरणिः । मेद्यति मित्रः । विरोचते विरोचनः, अनुदात्तेतश्च (३।२।१४९/३१२९) इति युच् । विभा दीप्तिर्वसु धनमस्य विभावसुः । अह्नः पतिरहर्पतिः, अहरादीनां पत्यादिषु (सू० ४८५१/१७२ वा०) इति वा रेफः ॥ ३१ ॥ भाति भानुः । हन्ति तमो हंसः । सूयते सविता । रूयते स्तूयते रविः । कर्मसाक्षी जगच्चक्षुरंशुमाली [ लोकबन्धुः ] त्रयीतनुः । [ इनो भगो ] धामनिधिः [ अब्जिनीपतिरिति ज्ञेयम् ] । प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः । शूरोंशुसत्तमः प्रोक्तः पद्मिनीकान्त इष्यते । मठरस्यापत्यं माठरः । दण्डोस्यास्तीति दण्डः । इन्द्राद्यो ह्यष्टादश नामान्तरेणार्कपरिचारकाः, यत्सौर(तन्त्र)म्-तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायकः । वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामन[नामत]श्च सः । यमोपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया । एवमन्येयावाद्याः (पाताद्याः) [ गुहहरराहुखरादयः । तेषु प्राधान्यात्त्रय एवोक्ताः ] । परितः पार्श्वे वर्तन्ते पारिपार्श्विकाः, परिमुखं च (४।४।२९/१५७९) इति चकाराट्ठक् ॥ ३२ ॥ सूतः सारथिः । (कश्यपस्यापत्यं काश्यपिः) ऋष्यन्धकेत्यण् (४।१।११४/११७७), काश्यप इति सभ्यः पाठः, बह्वादित्वाद्वा (४।१।४५/५०३) परितो (विष्यते) व्याप्यतेनेन परिवेषः । परितो धीयते परिधिः । समीपे सूर्यस्य प्रतिकृतिरुपसूर्यकम्, सूर्यमण्डलं च ॥ ३३ ॥ कीर्यते किरणः । वसन्त्यस्मिन् रसा उस्रः । मिनोति क्षिपति तमो मयूखः । अश्नुते-अंशुः । गां बभस्ति दीपयति गभस्तिः, पृषोदरादिः (६।३।१०९/१०३४) जिघर्ति घृणिः ।

11 Light. ३५ स्युःप्रभा-रुग्-रुचिस्त्विड्-भा-भाश्छवि-द्युति-दीप्तयः ॥
3 Sun-shine. रोचिः शोचिरुभे क्लीबे, प्रकाशो द्योत आतपः ।
4 Warmth. ३६ कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ॥
3 Heat. तिग्मं तीक्ष्णं खरं तद्वन्, मृगतृष्णा मरीचिका ।
2 Sultry vapour.
इति दिग-वर्गः ३. अत्र मूलश्लोकाः ३५, क्षे० ४.

## अथ काल-वर्गः ३

4 Time. १ कालो दिष्टो ऽप्यनेहा ऽपि समयो ऽप्यथ पक्षतिः ॥
2 First lunar day. प्रतिपद् द्वे इमे स्त्रीत्वे, तदाऽऽद्यास्तिथयो द्वयोः ।
1 A lunar day.
5 A day. २ घस्रो दिना ऽहनी वा तु क्लीबे दिवस-वासरौ ॥
9 Morning. प्रत्यूषो ऽहर्मुखं कल्यमुषः-प्रत्युषसी अपि ।
'व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते' ॥

---

पिपर्ति स्पृशति वा क्ष्मां पृश्निः, भुवं वृष्टयै प[ व ]र्षति सिञ्चति पृ[ वृ ]ष्णिरित्येके । कीर्यते करः । म्रियतेऽस्मिंस्तमो मरीचिः । दीधीते दीप्यते दीधितिः ॥ ३४ ॥ प्रभादीनामादित्यरश्मित्वाभावात्पृथक्पाठः, द्युतिच्छव्योरिन्दुप्रस्तावोक्तेः पुनरिहोपादानं सामान्यार्थम् । दीप्त्यातपादयो ह्यसाधारणा अपि कविभिः साधारणीकृताः, यथा मुखदीप्तिः, चन्द्रातपः । रोचनं रुक् । भाभासौ धातुभेदात् । शोचिर्निर्मल्यार्थोऽत्र ॥ ३५ ॥ कवंचोष्णे ( ६।३।१०७ / १०३२ ) इति का–कव–कत्समुदायात् त्रैरूप्यम् । एषां धर्ममात्रे क्लीबत्वं, धर्मिवृत्तित्वेऽभिधेयलिङ्गत्वम् । तेजनात्तिग्मतीक्ष्णौ । खं राति खरति वा खरम् । तद्वदिति घ क्लीबत्वं धर्मिणि त्रिष्विति दिश्यते । अत्युष्णार्थं चैतत्, यदाहुः – तिग्मं तीक्ष्णं कदुष्णं स्यात् । अन्यत्र तूपचारात् – तीक्ष्णोऽसिः । मृगाणां तृष्णास्याम् ( मृगतृष्णा ) । मरीचिप्रतिकृतिर्मरीचिका । ग्रीष्मे सिकतास्वर्क्करा: प्रतिफलिता जलत्वेनाभान्ति, अत एव मरुमरीचिकोच्यते ॥ ३६ ॥ इति व्योमदिग्वर्गः । २ ।

---

कलयति कालयति वा सर्वं कालः । दिश्यते स्म दिष्टः । न–ईहतेऽत्रानेहा, असुन्, ऋदुशनस्पुरुदंशोनेहसांच ( ७।१।९४ / २७६ ) इति सावनङ् । समेति समयः । पक्षस्य मूलं प्रारम्भदिनं पक्षतिः । प्रतिपद्यते उपक्रम्यतेऽनया प्रतिपत् । सा प्रतिपदाद्या यासां ताः, तन्यते तिथिः स्त्रीपुंलिङ्गः ॥ १ ॥ घसति तमो घस्यते–( अद्यते )ऽस्मिन् वा घस्रः । द्यति तमो दिनम् । न जहाति कालमहः, नञिजहातेः ( उ० १५६ )

4 Eve. — ३ प्रभातं च, दिनान्ते तु सायं संध्या पितृप्रसूः ।

1 Periods of the day. — प्राह्णाऽपराह्ण-मध्याह्नस्त्रिसंध्य, मथ शर्वरी ॥ — 1 Twilight.

12 Night. — ४ निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरी-तमस्विन्यौ रजनी यामिनी तमी ॥

1 A dark night. — ५ तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चान्द्रिकयाऽन्विता । — 1 A moonlight night.

1 A night and two days. — आगामि-वर्तमानाहर्युक्तायां निशि पक्षिणी ॥

---

इति कनिन् । दीव्यति दिवसम् । वसन्त्यस्मिन् वासरम् । प्रत्यूषति निशां प्रतिरुजति, प्रतिगता—उषा वा तदा प्रत्यूषः । काले साधु काल्यं, शाश्वतः कल्यमप्याह—कल्यं प्रभातं सज्जं च कल्यो नीरोगदक्षयोः २४ । उष ( ओष ) त्यर्ककैरुषः, कसुन् । एवं प्रत्युषः ॥ २ ॥ भातुं प्रवृत्तं प्रभातं, आदिकर्मणिक्तः ( ४।३।७१/३०५३ ) । विभातं व्युष्टं च । गोसर्गो देश्याम् । प्रातः प्रगेऽव्ययम् । सायमव्ययम् । सायाह्नादिदर्शनात् श्याद्व्यधेति ( ३।१।१४१/२९०३ ) णान्तोपि, स्याति दिनं सायः, सायसोह्ने मलोपश्चेति भाष्यं त्वनिष्टनिवृत्त्यर्थम् । संध्यायन्त्यस्यां संधीयेते अहोरात्रौ वास्यां संध्या । पितॄन् प्रसूते पितृप्रसूः, ब्रह्मणो ह्येषा पितृप्रसवित्री तनुः । प्रारम्भाऽपरं मध्यं वाह्नः, राजाहःसखिभ्यष्टच् ( ५।४।९१/७८८ ) अह्नोह्न एतेभ्यः ( ५।४।८८/७९० ) । तिस्रः संध्याः समाहृतास्त्रिसंध्यम् । आबन्तोवा ( वा० १५५७/८२१ ) इति पक्षे स्त्रीत्वं नेष्टं, यन्माला—त्रिसंध्यं तु नपुंसकम् । शृणाति चेष्टाः शर्वरी ॥ ३ ॥ निश्यति तनूकरोति चेष्टा निशा, आतश्चोपसर्गे । ( ३।१।१३६/२८९८ ) इति कः । निशीथोस्त्यस्यां निशीथिनी, महानिशाख्या । राति सुखं रात्रिः । आद्यन्तयोरर्धयामयोर्दिनव्यवहारात्त्रियामा । क्षणमवसरं ददाति क्षणदा विश्रान्तिप्रदेत्यर्थः । क्षप्यते क्षपा, भिदाद्यङ् ( ३।३।१०४/३२८१ ) । विभाति विभावरी, क्वनिप्, वनोरच ( ४।१।७/४५६ ) इति ङीप्—रश्च । रञ्जयति तमसा रजनी । यामाः सन्त्यस्यां यामिनी । ताम्यन्त्यस्यां तमी । (के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः । किमाह सीता दशवक्त्रनीता ) हारा महादेवरता तमातः ( विदग्ध० ) इति तमापि । वासतेयी मालायाम् ॥ ४ ॥ रात्रिः काकाक्षिवत् । तमोस्त्यस्यां तमिस्रा, ज्योत्स्नातमिस्रेति ( ५।२।११४/१९२१ ) साधुः । ज्यौत्स्नी तामसीत्यण्प्रकरणे ज्योत्स्नादिभ्यउपसंख्यानं वा० १९१०/३१९७ ), शाश्वतस्तु—ज्योत्स्ना ज्योतिष्मती रात्रिर्ज्योत्स्ना चन्द्रमसः प्रभेति १९२ । पूर्वापराह्णयोः पक्षयोरिव मध्ये वर्तमानत्वात्, वर्तमानाह्नो यदीया

| | | |
|---|---|---|
| 1 A multitude of nights | ६ गणरात्रं निशा बह्व्यः, प्रदोषो रजनीमुखम् । | 2 Evening. |
| 2 Mid-night. | अर्धरात्र-निशीथौ द्वौ, द्वौ याम-प्रहरौ समौ ॥ | 2 A watch. |
| 1 The full and change of the moon. | ७ स पर्वसंधिः प्रतिपत्-पञ्चदश्योर्यदन्तरम् । | |
| 2 Last day of the half month. | पक्षान्तौ पञ्चदश्यौ द्वे, पौर्णमासी तु पूर्णिमा ॥ | 2 Day of full moon. |
| 1 Moon a little gibbous. | ८ कला-हीने सा ऽनुमतिः, पूर्णे राका निशाकरे । | 1 Moon quite full. |
| 4 Day of new moon. | अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः ॥ | |
| 1 no-Moon. | ९ सा दृष्टेन्दुः सिनीवाली, सा नष्टेन्दु-कला कुहूः । | 1 Moon light-horned. |
| 2 An eclipse. | उपरागो ग्रहो, राहु-ग्रस्ते त्विन्दौ च पूष्णि च ॥ | |
| Eclipsed sun and moon. | १० सोपप्लवोपरक्तौ द्वा, वग्न्युत्पात उपाहितः । | 2 meteor. |
| 1 Sun & moon. | एकयोक्त्या पुष्पवन्तौ दिवाकर-निशाकरौ ॥ | |

---

निशा—निशामध्येपि दिवसः—पक्षिणीत्याहुः ॥ ५ ॥ गणानां रात्रीणां समाहारः, अहः सर्वैकदेशेति ( ५।४।८७ / ७८७ ) संख्यात्वादच् समासान्तः, रात्राह्नाहाःपुंसीति ( २।४।२९ / ८१४ ) असमाहारे हि पुंस्त्वम् । यन्माला—गणरात्रं नपुंसकम् । प्रारब्धा दोषा यस्मिन् (प्रदोषः)। समावित्येव । अर्धं रात्रेरर्धरात्रः, अर्धंनपुंसकमिति ( २।२।२ / ७१३ ) तत्पुरुषः । नियतं शेरतेऽस्मिन् भूतानि निशीथः, अत एव कात्यो निशीथं सुप्तजनमाह । याति यामः । प्रह्रियतेऽस्मिन् प्रहरः, पुंसिसंज्ञायां घः ( ३।३।११८ / ३२९६ ) ॥ ६ ॥ स सन्धिः पर्वेति संबन्धः, दुर्गोपि—प्रतिपत्पञ्चदश्योस्तु संधिः पर्व (नि.१-६-२०,)। प्रदिक् ककुप् । प्राच्यास्तु पर्वसन्ध्याख्यमाख्यन्, रूपभेदात्क्लीबे । पक्षान्त इति योगकालसंज्ञा । पूर्णो माश्चन्द्रः पूर्णमास्तत्र भवा । पौर्णमासी पूर्णो मासो वर्तते वास्यां, पूर्णमासादण् । पूरणं पूर्णिः, ऋल्वादिभ्यःक्तिन्निष्ठावत् ( वा० ४८२६ / ३२७२ ) इति नत्वं, पूर्णिं मिमीते पूर्णिमा, कः ॥७॥ सा पूर्णिमा कलाहीने निशाकरे, अनुमन्यतेऽनुमतिः । पूर्णे, राति सुखं राका । (अमावास्या) अमा सह वसतोऽस्यां चन्द्रार्कौ । (अमावस्या) अमावस्यदन्यतरस्यां ( ३।१।१२२ / २८७४ ) इति ण्यति पक्षे वृध्द्यभावो निपात्यते । दृश्यते याज्ञिकैर्दर्शः, न दृश्यते चन्द्रोस्मिन् विपरीतलक्षणया ॥ ८ ॥ सिनी सिता बाला कलास्याम् । कुहूर्विस्मापिकेत्यर्थः, कुं हन्ति तमसा वा । उपरज्यते छाद्यतेनेनोपरागः । ग्रहणं ग्रहः, ग्रहवृद ( ३।३।५८ / ३२३४ ) इत्यप् ॥ ९ ॥ इन्दू राहुग्रस्तः सोपप्लव उपरक्तश्च । एवं पूषापि । अग्निकृत उपसर्गः, उप—आसन्नमहितमस्योपाहितः, धूमकेत्वाख्य उत्पात इत्येके । एकयोक्त्या—अपृथग्वचनेन रोदसीवत्, न तु पुष्पवानिन्दुः सूर्यो वोच्यते, पुष्पं विकाशः प्रकाश इत्यर्थः ॥१०॥

| | | |
|---|---|---|
| 1 Sixteen thirds. | ११ अष्टादश निमेषास्तु **काष्ठा**, त्रिंशत् तु ताः **कला**, । | 1 Eight seconds. |
| Four minutes. | तास्तु त्रिंशत् **क्षण**स्ते, तु **मुहूर्तो** द्वादशाऽस्त्रियाम् ,॥ | 48 minutes. |
| 1 A day. | १२ ते तु त्रिंशद**हो-रात्रः**, **पक्ष**स् ते दश पञ्च च, । | 1 A fort-night. |
| 1 Night & dark fort-nights. | पक्षौ पूर्वाऽपरौ **शुक्ल-कृष्णौ**, **मास**स्तु तावुभौ, ॥ | 1 A month. |
| A season. | १३ द्वौ द्वौ मार्गादि- मासौ स्या**दृतु**स्तैर**यनं** त्रिभिः, । | A half year. |
| 1 A year. | अयने द्वे गतिरुदग् दक्षिणा ऽर्कस्य **वत्सरः**, ॥ | |
| 2 Equinox. | १४ सम-रात्रिं-दिवे काले **विषुवद्** **विषुवं** च तत् । | |
| *Pousee.* | 'पुष्य-युक्ता पौर्णमासी **पौषी**, मासे तु यत्र सा ॥ | |
| *Pousā.* | नाम्ना स **पौषो**, माघाऽऽद्याश् चैवमेकादशाऽपरे,' । | |
| 4 *A'gra-ha'yana.* | **मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च** सः ॥ | |
| 3 *Pausha.* 3 *Pha'lguna.* | १५ **पौषे तैष-सहस्यौ** द्वौ, **तपा माघे**,ऽथ **फाल्गुने** । | 2 *Māgha.* |
| 3 *Chaitra.* | स्यात् **तपस्यः फाल्गुनिकः**, स्याच्चैत्रे **चैत्रिको मधुः** ॥ | |

---

निमेषोऽक्षिस्पन्दकालः । काशते काष्ठा ताः काष्ठास्त्रिंशत्कलयति कालं कला । ताः कलास्त्रिंशक्षणनात्क्षणः, क्षणु हिंसायाम् । ते क्षणा द्वादश, मुहुरियर्ति मुहूर्तो द्विघटिकम् ॥११॥ ते मुहूर्तास्त्रिंशदह्ना सहिता रात्रिरहोरात्रः, अहः सर्वैकदेशेत्यच् ( $\frac{५।४।८७}{७८७}$ ), द्वन्द्वे त्वहोरात्राविमौ पुण्यौ । तेहोरात्राः पञ्चदश, पचति भूतानीति पक्षः, पक्ष परिग्रहे वा । शुक्लो मासस्य पूर्वपक्षः कृष्णस्त्वपरः, यतश्चैत्रसिताद्या मासाः । तौ पक्षौ माश्चन्द्रस्तस्यायं मास इति निर्वचनेन चान्द्रेण मानेनायम् । सौरसावननाक्षत्रमानैस्त्वन्यथा, मस्यति मिमीते वा ( मासः ) ॥ १२ ॥ इयर्ति ऋतुः। माघाद्युपक्रमस्ततोयनारम्भात् । यदाह तैर्ऋतुभिस्त्रिभिः, अयतेर्कोनेनायनम् । उत्तरा दक्षिणा च यार्कस्य गतिः, ते द्वे अयने मिलिते वत्सरो वर्षम् ॥ १३ ॥ समौ रात्रिंदिवौ यत्र, अचतुर—( $\frac{५।४।७७}{९४५}$-) इत्यादिना साधुः । विषु साम्येव्ययम्, तद्विद्यतेस्य विषुवत्, विषुवं च, वो मत्वर्थे लिङ्गात् ( अन्येभ्योपि दृश्यते ) । विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ( वा० $\frac{३।१०४}{१९०७}$ ) इति हि विषुव( ण )शब्दो युक्तः । मृगशीर्षेण युक्ता मार्गशीर्षी पौर्णमास्यस्मिन् , सास्मिन्पौर्णमासी ( $\frac{४।२।२१}{१२२३}$ ) इत्यण् । सहोस्यास्मिन् सहाः, मत्वर्थे मासतन्वोरिति ($\frac{४।४।१२८}{३४७४}$) यत्, तस्य लुगकारेकाररेफाश्चेति (वा० ?) । पक्षे लुक्, पुंस्त्वं लोकात्, सहश्च सहस्यश्च हैमन्तिकावृतू इति छान्दसम् । एवं तपाः—नभाः । भीमवन्मृगशीर्षस्य मृगत्वान्मार्गः । आग्रहायणी पौर्णमास्यस्मिन्नाग्रहायणिकः, आग्रहाण्यश्वत्थाट्ठक् ( $\frac{४।२।२२}{१२२४}$ ) ॥ १४ ॥ ( पौषः—तैषः प्रागवदण्—द्वयम् । सहोस्यास्तीति सहस्यः, मत्वर्थेमासतन्वोरिति ($\frac{४।४।१२८}{३४७४}$) यत् । एवं तपस्यनभस्यौ।

3 *Vais'ak'ha.* 2 *Jyaisht'ha.*
१६ वैशाखे माधवो राधो, ज्येष्ठे शुक्रः, शुचिस्त्वयम् ।
2 *Āshād'ha.* 3 *Śrāvaña.*
आषाढे, श्रावणे तु स्यात् नभाः श्रावणिकश्च सः ॥

4 *Bhad'ra.*
१७ स्युर्नभस्य-प्रौष्ठपद-भाद्र-भाद्रपदाः समाः ।
3 *Āświna.* 4 *Kārtika.*
स्यादाश्विन इषोऽप्याश्वयुजोऽपि, स्यात् तु कार्तिके ॥

1 Cold season. 1 Winter.
१८ बाहुलोर्जौ कार्तिकिको, हेमन्तः, शिशिरोऽस्त्रियाम् ।
4 Spring.
वसन्ते पुष्पसमयः सुरभिर्, ग्रीष्म ऊष्मकः ॥

7 Hot season.
१९ निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ।
2 Rains. 1 Sultry season.
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा, अथ शरत् स्त्रियाम् ॥

1 Season.
२० षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ।
6 A year.
संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः ॥

---

तपोस्यास्तीति तपाः । ( फाल्गुनिकः ) विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यष्ठक् ( ४।२।२३/१२२५ ) मधुर्वसन्तोस्यास्तीति मधुः, मधोर्ञ्च ( ४।४।१२९/३४७५ ) इति ञस्य वा लुक् ॥ १५ ॥ राधया युक्ता पौर्णमासि अस्मिन् राधः। शुच्यिद्यतेस्य शुक्रः, लुगकारेकाररेफाश्च ( वा० ? ) इति रेफः । शुच्यिद्यतेस्य शुचिः, इकारः । न भासनं मेघच्छन्नत्वादस्त्यस्य नभाः ॥ १६ ॥ भीमवच्चन्द्र( या )युक्ता भाद्री पौर्णमास्यस्मिन् भाद्रः । इष्यते-इडन्नं विद्यतेस्य-इषः, अकारः ॥ १७ ॥ बहुलाभिर्युक्ता बाहुली पौर्णमास्यस्मिन् बाहुलः । ऊर्क्—अन्नं बलं वास्यास्तीति—ऊर्जः हिमान्तोस्य हेमन्तः, पृषोदरादिः ( ६।३।१०९/१०३४ ) । (शिशिरः) शिनोत्यर्थं शीतेन, शिञ् निशाने । वसन्त्यस्मिन् सुखं, वस्ते भुवं वा वसन्तः, झच् । सुष्ठु रभते सुरभति वा सुरभिः । फल्गुर्दैश्याम् । गिरन्त्यम्बु ग्रीष्मः । ऊष्मप्रतिकृतिरूष्मकः ॥ १८ ॥ निदह्यतेस्मिन् निदाघः, घञ् , न्यङ्क्वादित्वात्कुत्वम् ( ७।३।५३/२८६४ ) । उष(ओष)ति—उष्णः । तपति तपः, अच्, यल्लक्ष्यम्—तपेन वर्षाः शरदा हिमागमः ( शिशु० १-६६ ) । प्रवर्षति प्रावृट्, नहिवृत्तिवृषीति ( ६।३।११६/१०३७ ) दीर्घः । भूम्नि बहुत्वे, वर्षमस्त्यासां वर्षन्ति वा वर्षाः । शीर्यन्तेस्यां पाकेनौषधयः शरत् ॥ १९ ॥ यत्कात्यः—आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः । हेमन्ताद्धि वत्सरस्यारम्भः । ऋतुः पुंलिङ्गः । संवसन्ति ऋतवोस्मिन् संवत्सरः, ऋतुपरिवर्तात्मा ह्यसौ, यद्भागुरिः—सर्वर्तुपरिवर्तस्तु स्मृतः संवत्सरो बुधैः । परिवत्सरोपि । इदावत्सर इद्वत्सरोनुवत्सरश्च ज्योतिषे । आप्यतेब्दः । जहाति-ऋतून् हायनः, हश्चव्रीहिकालयोः ( ३।१।१४८/२९१० ) इति ण्युट् । समन्ति समाः, सह मान्ति वर्तन्ते ऋतवो यासां वा, स्त्रीबहुत्वेयं यथा—जीव्या-

1 A patriarchal day. — २१ मासेन स्यादहो-रात्रः पैत्रो, वर्षेण दैवतः, । — 1 Day of the gods.

1 Day of *Brahmā*. — दैवे युग-सहस्रे द्वे ब्राह्मः, कल्पौ तु तौ नृणाम्, ॥ — 2 *kalpa*.

1 *Manvantara*. — २२ मन्वन्तरं तु दिव्यानां युगानामेक-सप्ततिः, ।

5 destruction of the warld. — संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ॥

12 Sin. — २३ अ-स्त्री पङ्कं पुमान् पाप्मा पापं किल्बिष-कल्मषम् ।

कलुषं वृजिनैनोऽघमंहो दुरित-दुष्कृतम् ॥

5 Virtue or moral merit. — २४ स्याद् धर्ममस्त्रियां पुण्य-श्रेयसी सुकृतं वृषः ।

12 Joy, or pleasure. — मुत् प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोद-संमदाः ॥

---

त्सहस्रं समाः । समांसमांविजायते ( ५।२।१२ / ९८९३ ) इत्येकत्वेपि दृश्यते ॥ २० ॥ मासेन पौरुषेणेति शेषः । पितृणामयं पैत्रः, देवतार्थे पित्र्यः स्यात् । तत्र कृष्णः पक्षोऽहः शुक्लो रात्रिः । वर्षेण पौरुषेणेति शेषः । [ देवतानामयं दैवतोऽहोरात्रः ] तत्रोत्तरायणमहः—दक्षिणायनं रात्रिः । [ ब्रह्मणोयं ब्राह्मः ] अहोरात्र इत्येव । दैवैर्हि सषाष्टैः ( षष्ट्यधिकैः ) त्रिभिरहोरात्रशतैर्दिव्यं वर्षं, तैर्द्वादशभिः सहस्रैर्लौकिकं चतुर्युगं, तच्च देवानामेकं युगं, तत्सहस्रं ब्रह्मणो दिनं भूतानां स्थितिकालः, तावत्येव रात्रिर्भूतानां प्रलयकालः । यन्मनुः—"चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् । तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु । एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ यदेतत्परिसंख्यातमादावेव चतुर्युगम् । एतद् द्वादशसाहस्रं देवानां युगमुच्यते ॥ दैविकानां युगानां तु सहस्रं परिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ (१-१६९-७२) । ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ, सर्वनाम्नां विधीयमानानूद्यमानलिङ्गग्रहणे कामचारः। एकः स्थितिं कल्पयति, द्वितीयः क्षयं कल्पयति ( अतः कल्प इत्युच्यते ) ॥ २१ ॥ मनूनां स्वायंभुव [ स्वारोचिषौत्तमितामसरैवत ] चाक्षुषवैवस्वतादीनां प्रजापतीनामन्तरमवकाशोवधिर्वा । तैर्हि चतुर्दशभिर्मन्वन्तरैर्ब्रह्मणो दिनम् । संवर्तते प्रलीयते कल्पते क्षीयतेऽस्मिन् वा जगत् । कल्पस्यान्तोवधिः कल्पान्तः । एकः कल्पोत्र क्षयार्थोऽन्यो ब्रह्मदिनार्थः, यच्छाश्वतः—कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने (२०१) । संहारो युगात्ययः परिवर्तश्च ॥२२॥ क्षयहेतुं पापमाह । पञ्चयते पङ्कः । पात्यस्मात्पाप्मा पापं च । केलयति किल्बिषम् कलयति कल्मषं कलुषं च । वर्ज्यते वृजिनम् । एत्येनः । न जहात्यघम् । अंहत्यंहः । दुरेति दुरितम् । दुष्क्रियते स्म दुष्कृतम् । एनोंहश्च सान्तौ । मालायां किण्वम् । मलोनेकार्थेषु ॥२३॥ "धारणाद्धर्मः ( म. भा. कर्ण ६९-५९ ) ", यागाङ्गे नपुंसकं—तानि धर्माणि प्रथमान्यासन् ( ऋ. वे० १०-९०-१६ ), फले तु पुमान्—एष धर्मः सनातनः ( मनु० )

९ ' लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा।
कुम्भीनसः फणधरो हरिर् भोगधरस् तथा॥

१० अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका। '

1 Belonging to a snake.
2 His expanded head.

त्रिष्वाहेयं विषाऽस्थ्यादि, स्फटायां तु फणा द्वयोः॥

2 His skin.
3 His venom.

११ समौ कञ्चुक-निर्मोकौ, क्ष्वेडस् तु गरलं विषम्।
पुंसि क्लीबे च काकोल-कालकूट-हलाहलाः॥

1 Nine sorts of fixed poison.

१२ सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः।
दारदो वत्सनाभश् च विष-भेदा अमी नव॥

1 A dealer in antidotes.
2 A snake-catcher.

१३ विषवैद्यो जाङ्गुलिको, व्यालग्राह्यहितुण्डिकः।

इति पातालभोगि-वर्गः ७, अत्र मूलश्लोकाः ११, क्षे० १॥.

---

जिह्मगः। कुम्भीनसः कञ्चुकी लेलिहानश्च। राजसर्पो भुजंगभुक्॥ ८॥ आहौ भवमाहेयं, दृतिकुक्षीति ( $\frac{४।३।५६}{१४३३}$ ) ढञ्। स्फटन्ति विशीर्यन्तेनया स्फटा, द्वयोर्वर्तमानायां स्फटायां फणापि द्वयोः, फटेत्येके। फण गतौ ( फणा )। दार्वीः कफेलुश्च। कञ्चुकमिव कञ्च्यते बध्यतेनेन ( कञ्चुकः )। निर्मुच्यते निर्मोकोहित्वक्। निर्ल्वयनी च। क्ष्वेडते मोहयति क्ष्वेडः। गिरति जीवं गरः, गरं लाति गरल श्यामश्यामलवत्॥ ९॥ नवामी विषप्रकाराः। काकमेचकः काकोलः, ईषत्कोलति संस्त्यायति वा। कालस्य वर्णस्य कूटोत्र कालकूटः, मृत्युसंबन्धी व्याजो वा। हलति विलिखति जठरं न विलिखति च हलाहलः, हालेव हलतीति लक्ष्ये हालाहलो हालहलश्च, यथा–स्निग्धं भवत्यमृततुल्यमहो कलत्रं हालाहलं विषमिवाप्रगुण तदेव ( काव्यालं० सू० वृ० IV. 2. 7. ) यथा–काममपायि मयेन्द्रियकुण्डैर्यद्यपि दुष्कृतहालहलौघः, यथा वा–मधु तिष्ठति वाचि योषितां हृदये हालहलं महाविषम् ( भर्तृ० शृङ्गा० )। सुराष्ट्रशुक्तिकदरस्सु देशेषु भवाः सौराष्ट्रिकादयः। ब्रह्मणः पुत्रः [यद् याज्ञवल्क्यः–त्वं विष ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः (या०२-११०)]॥१०॥ वत्सस्येव नाभिरस्य वत्सनाभः। ( जाङ्गुलिकः ) वसन्तादित्वात् ( $\frac{४।२।६३}{१२७३}$ ) ठक्, जाङ्गुलिको विषभिषगिति भागुरिः। अहितुण्डेन दीव्यति ( आहितुण्डिकः )॥११॥ इति पातालभोगिवर्गः। ७।

## अथ नरक-वर्गः ८

4 Hell.
Various hells.

स्यान् नारकस् तु नरको निरयो दुर्गतिः स्त्रियाम् ॥

१ तद्-भेदास्– तपनाऽवीचि-महारौरव-रौरवाः ।

संघातः कालसूत्रं चेत्याऽऽद्याः, सत्वास् तु नारकाः ॥

2 Departed souls.
1 The river of hell.
1 Misfortune or misery.
1 Throwing in hell.

२ प्रेता, वैतरणी सिन्धुः स्याद्, लक्ष्मीस् तु निर्ऋतिः ।

विष्टिराजूः, कारणा तु यातना तीव्रवेदना ॥ 3 Agony.

4 Mental halu.
2 Pain of labor.
3 Corporeal pain.

३ पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ।

स्यात् कष्टं कृच्छ्रमाभीलं, त्रिष्वेषां भेद्य-गामि यत् ॥

इति नरकवर्गः ८, अत्र मूलश्लोकाः ३॥, क्षे०.

---

नराः कायन्त्यस्मिन् नरकः । ( नारकः ) अन्येषामपि ( अन्येभ्योपिदृश्यते ) इति बाहुलकाद्वा दीर्घः । निष्क्रान्तः–अयान्निरयः, अयोनुकूलं दैवम् । तपति संतापयति तपनः, तपन्त्यनेन वा । अवन्त्यस्मादवीचिः, विरुद्धा वीचयोत्र वा, स्त्रियामपि । रुरुर्हिंस्रः क्रन्दश्च तत्र भवो रौरवः ॥ १ ॥ संह्रियन्तेत्र संहारः, संघात इत्येके । कालान्ययोमयानि सूत्राण्यत्र कालसूत्रम् ॥ आद्यशब्दात्तामिस्रान्धतामिस्रादयः । सत्त्वाः प्राणिनः, सीदन्तीति । प्रकर्षेणेताः प्रेताः । परेता अतिवाहिका( ता )श्च । नारकी नदी, विगततरणौ व्यर्के पाताले भवा वैतरणी, विगततरणिर्विनौका वा । निष्क्रान्ता ऋतेः सन्मार्गान्निर्ऋति ॥ २ ॥ विशति क्लेशं विष्टिर्नरके हठात्क्षेपः । आजवते–आजूः, क्विब्वचिप्रच्छीति ( वा० $\frac{२१४७-४८}{३१५८}$ ) क्विब्दीर्घौ, आ–अज्यते वा, आजूवेतनयोर्विष्टिः कर्मकृत्कर्मणोरपीति शाश्वतः (५०७) । (कारणा) कृञ् हिंसायां, णिच् । यत निकारादौ, णिच्, यातयति यातना नारकरुक् । दुष्टानि खान्यस्मिन् दुःखम् । प्रसूतेर्जातं दुःखं, ( आमनस्यं ) अमनसो भावः, वैमनस्यमित्यर्थः । षडपि मनःपीडार्था इति सभ्याः, यन्माला–दुःखं प्रसूतिजे क्लीबे पीडा बाधा च वेदना, दुःखमाधिः प्रसूतिजमिति कात्यः ॥ ३ ॥ कषिष्यति कष्टं । कष्टंभविष्यतीत्याहुः ( का० ), कृच्छ्रगहनयोःकषः ( $\frac{७।२।२२}{३०६२}$ ) इति नेट् । कर्षति कृन्तति वा कृच्छ्रम्, आसमन्ताद्भियं लातीति–आभीलम् । एतानि शरीरपीडार्थानि, लक्ष्ये तु नवाप्येकार्थाः । एषां दुःखादीनां मध्याद्विशेष्यनिष्ठा दुःखकष्टकृच्छ्रास्त्रिलिङ्गाः, यथा–सेयं दुःखा च दुरुपपादा च, दुःखः सुतो निर्गुणः, सर्वं दुःखं विवेकिनः ( यो. सू. २–१५ ) ॥ ४ ॥ इति नरकवर्गः ॥ ८ ॥

## अथ वारि-वर्गः ९

15 The sea or ocean.

१ समुद्रो ऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरो ऽर्णवः ॥ ॰
२ रत्नाकरो जलनिधिर् यादःपतिरपाम्पतिः ।

2 Particular seas.

तस्य प्रभेदाः–क्षीरोदो लवणोदस् तथा ऽपरे ॥

27 Water.

३ आपः स्त्री भूम्नि वार् वारि सलिलं कमलं जलम् ।
पयः कीलालममृतं जीवनं भुवनं वनम् ।
४ कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।
अम्भोर्णस् तोय-पानीय-नीर-क्षीराऽम्बु-शम्बरम् ॥

2 Watery.

५ मेघपुष्पं घनरसस्, त्रिषु द्वे आप्यमम्मयम् ।

4 A wave.

भङ्गस् तरङ्ग ऊर्मिर् वा स्त्रियां वीचिरथोर्मिषु ॥

---

समुनत्ति समुद्रः । अप्-उदकं धीयतेऽस्मिन्नब्धिरुदधिश्च, कर्मण्यधिकरणेच (३।३।९३/३२७१) इति किः, पेषवासवाहनधिषु च (६।३।५८/९९६)इत्युदकस्योदः । न कुं पृणाति मर्यादापालनादकूपारः । पारमावृणोति पारावारः, पारमिवावारमस्य वा दुस्तरत्वात् । उदकमस्त्यस्योदन्वान्, उदन्वानुदधौच (८।२।१३/१९०१) इति साधुः । स्यदन्ते सिन्धुः । सरांसि सन्त्यस्य सरस्वान् । सगरैः खातः सागरः । अर्णोऽस्यास्त्यर्णवः, अर्णसो लोपश्च (५०५३/१९२६) इति वः सलोपश्च ॥ १ ॥ यादांसि पाति यादःपतिः, पाथःपतिरित्येके । सुगममेव हि मध्यमपांपतेः–इति दर्शनात्समासे षष्ठ्या अलुक् । वीचिमाली सर [शर] ध्वजोऽवारपारश्च । (क्षीरोदः) उदकस्योदःसंज्ञायाम् (६।३।५७/९९) । अपरे दध्युदघृतोदसुरोदेक्षूदस्वादूदाः ॥ २ ॥ आप्नुवन्त्यापः स्त्रियां बहुत्वे । वृणोति वार्वारि च । सरति सलिलं, रलयोरैक्यम् । काम्यते कमलम् । जडति जलम् । पयते पीयते वा पयः, पय गतौ, पीङ् पाने । कीला ज्वाला अलति वारयति कीलालम् । भवत्यस्मात्सर्वं भुवनम् ॥ ३ ॥ कं बध्नाति कबन्धं, यच्छाश्वतः–७२० कबन्धं सलिले रुण्डे । कमन्धमिति द्वे नाम्नी इत्येके । उनत्त्युदकम् । पीयते पाति वा पाथः । पुष्णाति पुष्करम् । सर्वतोमुखं सर्वदिग्गतेः । अमत्यम्भः । ऋणोत्यर्णः । तुदति तौति वा तोयं, तुः सौत्र आवरणार्थो वा । नयति नीरम् । [घस्यते क्षियति वा क्षीरम्] । अम्बति (ते) अम्बु । शं वृणोति शंवरम् ॥ ४ ॥ मेघानां पुष्पं प्रसवः । दकं जीवनीयं च, यथा दकलावणिकाः । (अपां विकारोऽम्मयम्) एकाचोनित्यं (५०५२/१५२४) इति मयट् । आप्यं तु लक्ष्यात्, अत एव आप्यंवेति चान्द्रं सूत्रम् । (भङ्ग इ०) भज्यते तरत्यूर्वति चेति वाक्यानि, ऊर्मिर्वा स्त्रियामिति काकाक्षिवत् । वीची तु नित्यं स्त्री ॥

2 A surge or billow.
1 A whirlpool.
4 A drop of water.

६ महत्सूल्लोल-कल्लोलौ, स्यादावर्तो ऽम्भसां भ्रमः ।
पृषन्ति बिन्दु-पृषताः पुमांसो विप्रुषः स्त्रियाम् ॥

2 A winding descent of water.
2 A drain.
5 A shore or bank.

७ चक्राणि पुटभेदाः स्युर्, भ्रमाश् च जलनिर्गमाः ।
कूलं रोधश् च तीरं च प्रतीरं च तटं त्रिषु ॥

1 The bed.
2 An island.

८ पाराऽऽवारे पराऽर्वाची तीरे, पात्रं तदन्तरम् ।
द्वीपो ऽस्त्रियामन्तरीपं यदन्तर् वारिणस् तटम् ॥

1 One formed by alluvion.
2 A sand bank.
5 Mud or clay.

९ तोयोत्थितं तत् पुलिनं, सैकतं सिकतामयम् ।
निषद्वरस् तु जम्बालः पङ्को ऽस्त्री शाद-कर्दमौ ॥

2 Inundation.
2 A temporary well, fountain.
1 Navigable. 3 A boat.

१० जलोच्छ्वासाः परीवाहाः, कूपकास् तु विदारकाः ।
नाव्यं त्रि-लिङ्गं नौ-तार्ये, स्त्रियां नौस् तरणिस् तरिः ॥

---

॥ ५ ॥ ऊर्ध्वं लोलः [ लोलयति ] उल्लोलः । कल्लन्तेनेन नद्य इति कल्लोलः, कुत्सितो लोल इत्येके । लहरी-ओघश्च । आवर्तते मण्डलेन भ्रमत्यावर्तः । पर्षति सिञ्चति पृषत्, रूपभेदात्क्लीबे । बिन्दति बिन्दुः, बिदि अवयवे । विगतः प्रोषो दाहोस्या विप्रुट् ॥ ६॥ चक्राकारेण यान्त्यधः ( चक्राणि ) । पुटं भित्त्वा निर्यान्तीत्युपध्यायोत्प्रेक्षा । वक्राणीति माला । नदीवङ्काख्या इति च गौडो भ्रान्तः । तेनातोन्ये भ्रमाः प्रणाल्याद्या जलपथाः । कूलति कूलं, कूल आवरणे । रुणध्यम्भो रोधः । तरन्त्यस्मात्तीरम् । तीरप्रतीरे द्वीपप्रदीपवत् । तट्यत आहन्यतेम्भसा तटम् ॥ ७ ॥ ( नद्याः ) परे पार्श्वे कूलं पारं, पार्यते समाप्यतेस्मिन्निति वा । अर्वाक् पार्श्वे कूलमवारम्, यदाह—अर्वाक् कूलमवारं स्यात् । परावाची इत्येके, अर्वाक्शब्दस्याव्ययत्वात् । न वार्विद्यतेस्यावारं न व्रियते वा । तयोः कूलयोर्मध्यं, पीयते पात्रं प्रवाहः । द्विधा गता आपोत्र द्वीपम् । अन्तरपामन्तरीपं, द्व्यन्तरुपसर्गेभ्योप ईत् ( $\frac{६।३।९७}{९४१}$ ) ऋक्पूरब्धूरिति ( $\frac{५।४।७४}{९४०}$ ) अः समासान्तः ॥ ८ ॥ तत्तटं तोयात्क्रमेणोत्थितं पुलिनं, पुलो महत्त्वमस्यास्तीति, तद् द्वीपमिति माला—वा ना द्वीपं च पुलिनम् । तदेव प्रकृतं पुलिनं, सिकतास्यास्ति सैकतं, देशेलुबिलचौच ( $\frac{५।२।१०५}{११९२}$ ) इत्यण् । [ निषीदन्त्यस्मिन् निषीदन्तं वृणोति वा निषद्वरः । जमति ग्रसते जम्बालः । पञ्च्यते पङ्कः । शीयन्तेस्मिञ्शादः । कृणोति कर्दमः ] । चिखल्लश्च ॥ ९ ॥ जलं प्रवृद्धमुच्छ्वसिति परिवहति यैर्निर्गममार्गैस्ते परीवाहाः, यल्लक्ष्यं-उपार्जितानामर्थानां त्याग एव हि रक्षणम् । तटाको ( तडागो ) दरसंस्थानां परीवाह इवाम्भसाम् ( पंचतन्त्र I–3) ( चाणक्यश० ) ॥ परिवाहोपि । कूपप्रतिकृतिः कूपकः, शुष्कनद्यादौ जलार्थं गर्ताः क्रियन्ते, यत्कात्यः—विवरान् कूपकानाहुः । विदारयति क्ष्मां विदारकः, मालाच—चुण्डी ( ण्डा ) विवरोत्साश्च

3 A raft or float. 1 A natural stream. 2 Fare or freight. 2 An oval basin.

११ उडुपं तु प्लवः कोलः, स्रोतो ऽम्बु-सरणं स्वतः ।
आतरस् तरपण्यं स्याद्, द्रोणी काष्ठाम्बुवाहिनी ॥

2 A voyaging merchant. 2 The pilot or helmsman. 2 The crew. 2 The mast.

१२ सांयात्रिकः पोतवणिक्, कर्णधारस् तु नाविकः ।
नियामकाः पोतवाहाः,कूपको गुणवृक्षकः ॥

2 The oar. 2 The rudder. 2 A scraper or shovel. 2 A bucket.

१३ नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ।
अभ्रिः स्त्री काष्ठकुद्दालः, सेकपात्रं तु सेचनम् ॥

1 The boat's half. 1 Landed from a boat. 2 Clear, transparent. 3 Turbid water.

१४ क्लीबे ऽर्धनावं नावो ऽर्धे, ऽतीतनौके ऽतिनु त्रिषु ।
त्रिष्वागाधात्, प्रसन्नोऽच्छः, कलुषोऽनच्छ आविलः ॥

3 Deep. 1 shallow. 3 A fisherman.

१५ निम्नं गभीरं गम्भीरमुत्तानं तद्-विपर्यये ।
अगाधमतलस्पर्शे, कैवर्ते दाश-धीवरौ ॥

---

कूपकाः । नावातार्यं, नाव्यं नौवयोधर्मेति (४।४।९१/१।६।४२) यत् । नुद्यते नौः, ग्लानुदिभ्यांडौः (उ० २२२) । तरन्त्यनया तरणिस्तरीश्च ॥१०॥ उडुप्यते–उडुपस्तृणप्लवः । कवन्तेनेन कोलः, कोलति संस्त्यायति वा कोलः, यच्छाश्वतः–पोतृप्लवकयोः कोलः कोलं तु बदरीफलम्(३६५)। स्वतोकृत्रिमम् । आतरन्त्यनेनातरः,आवाप इत्येके। पणन्तेनेन पणः, पणे साधु पण्यं मूल्यं, साधौ (तत्रसाधुः ४।४।९८/१।६।५०) इति यत् । काष्ठमुपलक्षणं, काष्ठाश्मादिमयी जलधारिणी द्रोणी, द्रवत्यम्भोस्याम्, द्रोणिका त्वम्बुवाहिनीत्येके पेठुः ॥ ॥ ११ ॥ समुदितानां यानं संयात्रा, सा प्रयोजनमस्य (प्रयोजनम्) सांयात्रिकः । पवते वातेन पोतो वाहनम् । कर्णोरित्रं, कर्णः श्रोत्रमरित्रं चेति दुर्गः । नावा तरति नाविकः, नौद्व्यचष्ठन् (४।४।७/१।५।५६) नियन्तुं शक्ता नियामकाः । निया( र्या )माश्च । गुणवृक्षो यत्र नौरज्ज्वा बध्यते, पोते ध्वजपटाद्याधार इत्येके । कूपे–आधारगर्ते कायति कूपकः, गौडस्तु जलान्तस्तरून्कूपकानाह ॥१२॥ येन नौर्वाह्यतेसौ नौकादण्डः । क्षिप्यतेनया क्षेपणी, क्षेपण्यपभ्रंशः, क्षिपेत्युपाध्यायः। के जले नावो निपातयन्ति स केनिपातः, हलदन्तादिति (३।३।९/९।६६) अलुक् । इयर्त्यनेनारित्रम्, स्फ्यादि कोटिपात्रं वा । न बिभर्त्यभ्रिः । काष्ठे कुद्दालः काष्ठमयो वा, येन निखन्यते भग्नं पोतादिकं कुथेन पूर्यते । (सेचनं) येन नावो जलमुद्ध्रियते ॥१३॥ क्वचित्-यानपात्रं तु पोतोऽब्धिभवे त्रिषु समुद्रियम् । सामुद्रिको मनुष्योऽब्धिजातादौ नौः समुद्रिका [ जाता सामुद्रिका च नौः ] ॥ अर्धं नावोर्धनावं, नावोद्विगोः (५।४।९९/८०१) अर्धाच्च (५।४।१००/८०२) इति टच् । नावमतिक्रान्तमतिनु जलम्, अतिनौः पुमान् स्त्री वा । त्रिष्वागाधात्–अधिकारोयम्, अभिविधावाङ् । अच्छयते न च्छाद्यते वाच्छः । कं लुषति हिनस्ति कलुषः । आ–अव–एलयत्याविलः, आविल्यते–आभिद्यते वा, विल भेदने ॥ १४ ॥ नमति निम्नति वा निम्नं, स्ना

| | |
|---|---|
| 2 A net.<br>2 Packthread.<br>2 A fish basket.<br>2 Goad. | १६ आनायः पुंसि, जालं स्याच्छणसूत्रं पवित्रकम् ।<br>मत्स्याधानी कुवेणी स्याद्, बडिशं मत्स्यवेधनम् ॥ |
| 8 A fish. | १७ पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः ।<br>विसारः शकुली चाथ गडकः शकुलार्भकः ॥ |
| 2 Sheat fish.<br>2 A porpoise.<br>2 Sort of sprat.<br>2 A sort of carp. | १८ सहस्रदंष्ट्रः पाठीन, उलूपी शिशुकः समौ ।<br>नलमीनश् चिलिचिमः, प्रोष्ठी तु शफरी द्वयोः ॥ |
| 1 Small fry.<br>1 Various sorts of fish. | १९ क्षुद्राऽण्ड-मत्स्य-संघातः पोताधान, मथो झषाः– ।<br>रोहितो मद्गुरः शालो राजीवः शकुलस् तिमिः ॥ |
| 2 Aquatic animals.<br>Various sorts. | २० तिमिङ्गिलाऽऽदयश् चाथ यादांसि जलजन्तवः ।<br>तद्-भेदाः–शिशुमारोद्र-शङ्कवो मकराऽऽदयः ॥ |

---

अभ्यासे । गमे भियं राति गभीरं गंभीरं वा । ऊर्ध्वं तन्यते–उत्तानं गभीरादन्यत् । नास्ति गाधः प्रतिष्ठास्यागाधम् । नास्ति तलेधःस्पर्शोस्यातलस्पर्शम् । के ( जले ) वर्तते केवर्तो मत्स्यादिस्तस्यायं ( घातकः ) । द्यति दशति दाश्नोति वा मत्स्यान्दाशः । धीयते–आध्रियते धीवरः ॥ १५ ॥ कुत्सितं वेणन्तेस्यां मत्स्याः कुवेणी, वेणृ गतौ, मत्स्यबन्धनीत्यर्थः । मत्स्यकरण्डिका च । बलिनः ( मत्स्यान् ) श्यति बलिशम् । विध्यतेनेन वेधनं, विध विधाने इत्यस्मात्, व्यधेर्व्यधनमिति स्यात् ॥ ॥ १६ ॥ रोम पक्षोत्र । झषति झषः । माद्यति मत्स्यः, मच्छोपि । मीनाति मीनः । ग्रह्यादौ ( नन्दिग्रहीति ) विसारी, ततो वैसारिणः, विसारिणोमत्स्ये ( ५।४।१६ / २०८४ ) इति स्वार्थेऽण् । सृस्थिरे ( ३।३।१७ / ३१८३ ), व्याधिमत्स्यबलेषु ( ३१७४ / ३१८३ ) इति कर्तरि विसारः । शकलानि पृष्ठे सन्त्यस्य शकली, सशल्क इत्यर्थः । शल्की च । गडति पुच्छाच्छोटनात्सिञ्चति गडकः । शकुलोत्र मत्स्यमात्रे ॥ १७ ॥ विशेषानाह । सहस्रदंष्ट्रो वादालो नाम मत्स्यः । पाठीनश्चित्रवल्लिः, बहुदंष्ट्रत्वात्पाटयतीति, भक्ष्यत्वेन पठ्यते वा । एतौ सादृश्यात्पर्यायौ । शिशुमारप्रतिकृतिः ( शिशुकः ) । उलुपीत्यन्तः, उलुम्पतीति । सुषिर–तृणान्तश्चारी नलमीनःनडाभो वा । चीयते मीयते च चिलिचिमः, चिलिचिमस्त्रिदोषकृदिति वैद्याः । प्रोषति पित्तकारित्वात्प्रोष्ठी । शफान् राति शीघ्रगत्वाच्छफरी ॥ १८ ॥ सूक्ष्माश्चाण्डान्निःसृताश्च मत्स्याः क्षुद्राण्डमत्स्याः । पोता आधीयन्तेत्र पोताधानम् । झषा मत्स्यविशेषा अमी । रोहितो रक्तत्वात् । मज्जति मद्गुरः । शलति शालते वा शालः । राज्यः सन्त्यस्य राजीवो वज्राभः । शक्नोति गन्तुं शकुलः । तिम्यति तिमिः ॥ १९ ॥ तिमिं गिलति तिमिंगिलः, गिलेऽगिलस्य ( ३९७९ / १००७ ) इति मुम् । आदिशब्दात्तिमिंगिलगिलनन्द्या[ न्दी ]वर्तादयः । याति यादः । जलजन्तुर्जलचरः । उनत्त्युद्रः । शङ्कतेस्माच्छङ्कुः । मा कुर्यात्किंचिदिति त्रस्यन्त्य-

| | | |
|---|---|---|
| 2 A crab. | २१ स्यात् कुलीरः कर्कटकः, कूर्मे कमठ-कच्छपौ। | 3 A turtle or tortoise. |
| 2 A shark. 2 A crocodile. | ग्राहोऽवहारो. नक्रस्तु कुम्भीरो, ऽथ महीलता ॥ | |
| 3 A worm. 2 A gangetic alligator. | २२ गण्डूपदः किञ्चुलको, निहाका गोधिका समे । | |
| 3 A leech. | रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥ | |
| 2 A pearl oyster. 2 A conch. | २३ मुक्तास्फोटः स्त्रियां शुक्तिः, शङ्खः स्यात् कम्बुर-स्त्रियौ । | |
| 2 small shell. 2 A bivalve shell. | क्षुद्रशङ्खाः शङ्खनखाः, शम्बूका जलशुक्तयः ॥ | |
| 6 A frog. | २४ भेके मण्डूक-वर्षाभू-शालूर-प्लव-दर्दुराः । | |
| 2 A small worm. 2 A female frog. 2 A female turtle. | शिली गण्डूपदी, भेकी वर्षाभ्वी, कमठी डुलिः ॥ | |
| 1 Sort of sheat-fish. 2 A cockle. | २५ मद्गुरस्य प्रिया शृङ्गी, दुर्नामा दीर्घकोशिका । | |
| 2 A lake or pond. 1 A deep lake. | जलाशया जलाधारास्, तत्राऽगाध-जलो ह्रदः ॥ | |

स्मान्मकरः। आदिशब्दाज्जलहस्तिग्राहाद्याः ॥ २० ॥ कौ लीयते कुलीरः, कुलिन-मीरयति वा, जनकभक्षकत्वात्, यत्कौटिल्यः-( १।१६।१२ ) कर्कटसधर्माणो हि राजपुत्रा जनकभक्षाः। कृणोति कर्कटकः। कुरति कुमूर्वति वा कूर्मः। काम्यते यज्ञार्थं के मठति वा कमठः। कच्छेन पिबति कच्छपः। गृह्णाति ग्राहस्तन्तुनागाख्यः, विभाषा ग्रहः ($\frac{३।१।१४३}{२९०५}$) इति णः। अवह्रियतेऽनेनेति, गोचरादिसूत्रेऽवहारोपीत्युप-संख्यानात् ($\frac{५७७}{३३०९}$) घञ्, पुंसिसंज्ञायांघःप्रायेण ($\frac{३।३।११८}{३२९६}$) अवहरति वा, श्याद्-व्यधेति ($\frac{३।१।१४१}{२९०३}$) णः। न क्रामति नक्रः। कुम्भिनमीरयति कुम्भीरः। ( मही-लता) भूमिसूर्नाम कृमिः॥२१॥ गण्डवो ग्रन्थयः पदान्यस्य गण्डूपदः। किंचिच्चुलु-म्पति किंचुलुकः,लकान्तो वा। निजहाति गुप्यति च (निहाका,इ०), बिलेशयादन्योयं जलचरः प्राणी। टकः गापोष्टक्। पिबतेःसुराशीध्वोरिति ($\frac{३।२।८}{२९२२}$) नियमाद्रक्तपा, टक्, क इत्येके। आ-उच्यते, ओकउचःके ($\frac{७।३।६४}{२८८०}$) उणादौ सान्तोन्यः। शालूकादि-वज्जलूकेति श्रीभोजः ॥२२॥ मुक्ताः स्फुटन्त्यस्मान्मुक्तास्फोटः। शोकति शुक्तिः, शुक गतौ, क्तिच्। शं खनति शाम्यति वा शङ्खः। काम्यते कम्बुः। सूक्ष्मनद्यादिजाः कृमयः, शंकनका इत्यसत्। क्षुलकाश्च। शं वान्ति शंबूका जलमात्रजाः ॥ २३ ॥ बिभेति भेकः। मण्डति मण्डते वा सरो मण्डूकः। वर्षासु भवति वर्षाभूः। शलति शालते वा शालूरः, सालूर इत्येके। प्लवते प्लवः। दृणाति शब्दैः कर्णौ दर्दुरः। श्निोति शिलति वा शिली। गण्डूपदाज्जातौ पुंयोगे वा ङीष्। ( वर्षाभ्वी ) भुवश्चेति ( उ० ४४८ ) छान्दसो ङीष्। दोलयति डुलिः। कूर्मी च ॥ २४ ॥ मद्गुराख्यो मत्स्यः। शृणाति शृङ्गी. सादृश्याद्योग्यतया प्रिया। जलूकाकारेयं दीर्घकोशत्वात्, दुष्टो नामो नमनमस्या दुर्नामा, दुःसंज्ञेत्येके। जलमाशयो ह्रदयमस्य

4 A well. | २६ आहावस् तु निपानं स्यादुपकूप-जलाशये । | 2 A trough near a well.
1 The wooden frame for the rope. | पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा ॥
1 The cover or facing of a well. | २७ नेमिस् त्रिकाऽस्य, वीनाहो मुख-बन्धनमस्य यत् ।
2 A square or a large pond. | पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ॥ | 2 A natural pond.
5 One deep enough for the lotus. | २८ पद्माकरस् तडागो ऽस्त्री कासारः सरसी सरः ।
2 A basin. 2 Well. | वेशन्तः पल्वलं चाऽल्पसरो, वापी तु दीर्घिका ॥
2 A moat or ditch. 1 A dike. | २९ खेयं तु परिखा, ऽऽधारस् त्वम्भसां यत्र धारणम् ।
3 A basin round the foot of a tree. | स्यादालवालमावालमावापो, ऽथ नदी सरित् ॥
16 A river. | ३० तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।
स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽपगा ॥
३१ ‘ कूलङ्कषा निर्झरिणी रोधोवक्रा सरस्वती ’
8 The *Ganges*. | गङ्गा विष्णुपदी जन्हुतनया सुरनिम्नगा ॥

---

जलाशयः, जलमाशेतेत्र वा। सामान्येनोपक्रमोयम् तत्र जलाशयेष्वमी विशेषाः संगमान्ताः। ( ह्रदः ) ह्रादो ह्रस्वः ॥ २५ ॥ नियतं पिबन्त्यत्र निपानम्। आह्वयन्ते-स्मिन्गाव आहावः, निपानमाहावः ( ३।३।७४ / ३२५६ ) इति साधुः, कूपसमीपे शिलादि-निबद्धं पशुपानार्थं कूपोध्दृताम्बुस्थानम्। अनन्त्यनेनान्धयति वान्धुः। प्रजहात्यम्बु प्रहिः। कुत्सिताः कोर्वा–आपोत्र कूपः। उदकं पीयतेस्मिन्नुदपानम् ॥ २६ ॥ अस्य कूपस्यान्ते रज्ज्वादिधारणार्थं दारुयन्त्रं त्र्यंशं त्रिका। कूपस्योर्ध्वे–इष्टिकाभिर्विनह्यते वीनाहो नान्दीपट्टाख्यः। पुष्करादिभ्यो देशे ( ५।२।१३५ / १९४१ ) इतीनिः। नागादिकुण्डम-कृत्रिममखातमित्येके ॥ २७ ॥ ( तडागः ) तड आघाते, तडाक इत्येके, तटान्यकति तटाकमित्यन्ये। पद्माकरो योग्यत्वात्। कमासरत्यत्र कासारः, कासमृच्छति वा नड्वलाम्बुत्वात्। महत्सरः सरसी, षिद्गौरादिभ्यश्च ( ४।१।४१ / ४९८ ) इति ङीष्। विशन्ति मज्जन्त्यस्मिन्वेशन्तः, झच्। पल्यते पल्वलः, पल गतौ। उप्यतेस्यां वापी। दीर्घैव दीर्घिका, संज्ञायां कन् ( ४।३।८७ / २०४२ ) ॥ २८ ॥ ( खेयं ) ईंचखनः ( ३।१।१११ / २८६० ) इति यत्, दुर्गवेष्टनखातिका। परिखन्यते परिखा, डः। ( आधारः ) क्षेत्रादिसेकार्थं यत्र संचीयतेऽम्भः। वृक्षसेकार्थं तले द्रवतोम्भसः स्थानं, यदाहुः–आलवालं विदुर्धीरा धारणं द्रवतोऽम्भसः, मुनिश्च–अपां धारणमाधारस्तदल्पं चालवालकम्, आलूयते खन्यते–आलवालम्। आवलते बहिर्निर्गमादम्भोत्रावालम्। आ–उप्यतेम्भोत्रावापः ॥ २९ ॥ नदट् पचादिः, ङीप्। सरति सरित्। ह्रादोस्त्यस्याः, ह्रदिनीत्येके। धुनोति धुनी। आ–अपगच्छति, अप्संबन्धिना वेगेनापेन च गच्छति वापगा। ॥ ३० ॥ गां गाते गच्छति गङ्गा, अगं गच्छति वा। विष्णुपदार्वोत्था विष्णुपदी,

३२ भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ।

4 The *Yamunā*.
कालिन्दी सूर्यतनया यमुना शमनस्वसा ॥

4 The *Narmadā*.
३३ रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।

2 The *Karatôyā*.
2 The *Bāhudā*.
करतोया सदानीरा, बाहुदा सैतवाहिनी ॥

2 The *Satadru*
2 The *Vipāsā*.
३४ शतद्रुस् तु शुतुद्रिः स्याद्, विपाशा तु विपाट् स्त्रियाम् ।

2 The *Sôna*.
1 A canal.
शोणो हिरण्यवाहः स्यात् कुल्याऽल्पा कृत्रिमा सरित् ॥

Various rivers.
३५ शरावती वेत्रवती चन्द्रभागा सरस्वती ।

1 The mouth of a river.
कावेरी सरितो ऽन्याश् च, संभेदः सिन्धुसंगमः ॥

1 An issue from a pond.
३६ द्वयोः प्रणाली पयसः पदव्यां, त्रिषु तूत्तरौ ।

belonging to certain Rivers.
देविकायां सरय्वां च भवे दाविक-सारवौ ॥

---

कुम्भपदीषु च (५।४।१३९/८७८) इति साधुः। जह्नुना पीता श्रोत्रेण त्यक्तेति जाह्नवी। भगीरथावतारिता भागीरथी ॥ ३१ ॥ (कालिन्दी) कलिन्ददेशजा। यमेन यमजा यमुना, यमी च। (रेवा) रेवृ प्लवगतौ। नर्मार्थं सोमवंश्येन पुरूरवसावतारिता (नर्मदा)। मेकलोऽद्रिः प्रभवोस्याः ॥ ३२ ॥ गौरीविवाहे हस्तात्प्रदानतोयाज्जाता (करतोया)। सितैव सैती (वाहिनी), यन्माला–मन्तव्या बाहुदार्जुनी। बाहुभिर्दीयते तीर्यते बाहुदा, बहुदेन कार्तवीर्यार्जुनेनावतारितेत्यागमः। शु पूजितमाशु वा तुदति शुतुद्रिः, एतद्युध्यमानाः शितद्रुः सितद्रुर्वेत्याहुः, इमं मे गङ्गे यमुने सरस्वति शुतुद्रीति हि श्रुतिः (ऋ. वे. १०-७५-५)। वसिष्ठशापभया-च्छतधा द्रुता शतद्रुः। वसिष्ठं विपाशितवती विपाट् ॥ ३३ ॥ (शोणः) नदोयम्, शोणृ वर्णगत्योः। हिरण्यं वहति (हिरण्यवाहः)। कृत्रिमाल्पा च क्षेत्रसेकार्था कुल्या, कुले कुटुम्बे साध्वी, यदाहुः–कुल्याधीनं कुलं विद्यादित्या–(?) व्यव-स्थिताः। दांपत्यं कुलमित्यन्ये कुलं वा हलमुच्यते ॥ सारणी च। शरादीनां च (६।३।१२०/१०४२) इति दीर्घे शरावती। (चान्द्रभागा) चन्द्रभागाभ्यां गिरिभ्यां प्रवहति, चन्द्रभागान्नद्यामिति (ग० ५२) साधुः, चन्द्रेण भागतोन्यस्ता चन्द्रभा-गेत्येके। सरांसि सन्त्यस्यां सरस्वती ॥ ३४ ॥ कवेरस्य जलदेहस्येयं कावेरी। सरिद्वि-शेषा एते, अन्याः सरयूदेविकागोदावरीवेण्याद्याः। संगमो भिन्नयोः संभेदो नदीमेलः। प्रणडत्यम्भोनया प्रणाली जलनिर्गमनमार्गो मकरमुखादिः, (अन्ये) स्त्रीनपुंसकयोराहुः ॥ ३५ ॥ तत्रभवः (४।३।५३/१४२८) इत्यण् देविकाशिंशपेति (७।३।१/१४३९) आत्वम्. दाण्डिनायनेति (६।४।१७४/११४५) सारवःसाधुः। सुगन्धि(न्ध)प्रयोजनं सौगन्धिकाख्यम्। के ह्लादते कह्लारं, शारदं शुक्लं चैतत्। हल्लति घूर्णते हल्लकम्।

2 White water lily. 1 A red one. 2 A water lily.

३७ सौगन्धिकं तु कल्हारं, हल्लकं रक्तसंध्यकम् ।
स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ॥

2 A blue one. 2 The esculent white sort. 1 The root of a water lily. 2 Pistia stratiotes.

३८ इन्दीवरं च नीलेऽस्मिन्, सिते कुमुद-कैरवे ।
शालूकमेषां कन्दः स्याद्, वारिपर्णी तु कुम्भिका ॥

3 Vallisneria. 2 A place abounding in water-lilies. 3 An assemblage of lotus flowers.

३९ जलनीली तु शैवालं शैवलो, ऽथ कुमुद्वती ।
कुमुदिन्यां, नलिन्यां तु बिसिनी-पद्मिनी-मुखाः ॥

16 A lotus.

४० वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥

४१ पङ्केरुहं तामरसं सारसं सरसीरुहम् ।
बिसप्रसून-राजीव-पुष्कराऽम्भोरुहाणि च ॥

2 A white lotus. 3 A red lotus. 2 The stalk of a water-lily.

४२ पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ।
रक्तोत्पलं कोकनदं, नालो नालमथाऽस्त्रियाम् ॥

---

रक्तान् संधीनकति रक्तसंध्यकं, रक्तं संध्येव वा, रक्तोत्पलं चैतत् ॥ ३६॥ उत्पाल्यते उत्पलति वा उत्पलम्। कौ वलते प्राणिति कुवलयम् , कुत्सितो बहिर्वलयः पत्रवेष्टनमस्येति श्रीभोजः। विशेषानस्याह। इन्दतीन्दीवरं कुवलयदलनीलेति(का.सू.४।१।१०) सामान्यस्य विशेषवृत्तेः। अस्मिन् सिते, कौ मोदते कुमुदं, कः। के रौति केरवो हंसस्तस्येदं प्रियं कैरवम्॥३७॥ शालते शालूकं, कन्दो मूलमेषामुत्पलादीनाम्। (वारिपर्णी) वारि पिपर्ति, फञ्जा नाम शाकं, शूषेत्येके। कुम्भोस्त्यस्याः कुम्भिका, कुम्भीको वारिपर्णः स्यादित्येके। नीलिकाख्या जलशूकोपि, शेते जले शेवलं शेवालं च, शीङो– वलञ्वलन्वालनः (स. कं. २-३-१२१), शैवलं शैवालमिति तु द्रविडाः। कुमुदिन्यां (लतायां) कुमुद्वती, कुमुदनडवेतसेभ्योड्मतुप् (४।२।७७ / १३०६) ॥ ३८ ॥ नडाः सन्त्यस्यां नलिनी पुष्करादिभ्योदेशे (५।२।१३५ / ११४१) इतीनिः। मुखशब्दात्पुटकिन्यब्जिन्यम्भोजिन्याद्याः। पद्यते लक्ष्मीरत्र पद्मम्। नलाः सन्त्यस्य नलिनम्। अरान् राजीर्विन्दत्यरविन्दम् , अनुपसर्गाल्लिम्पविन्देति (३।१।१३८ / २९००) शः ॥३९॥ शतसहस्रे बहूपलक्षणम्। कमम्भोलति भूषयति कमलम्। केन मल्यते वा कमलम्। कुशे जले शेते कुशेशयम्। तामः प्रकर्षो रसोस्य तामरसम्, तामः प्रकर्षार्थस्तारतम्यवत् , ताम्यन्ती रस्यते वा ॥ ४० ॥ राज्यः सन्त्यस्य राजीवम्। पुष्णाति पुष्करम्। नालीकं च। पुनाति मङ्गलत्वात्पुण्डरीकम् ॥ ४१ ॥ कोकाश्चक्राह्वा नदन्त्यस्मिन् , आहुश्च–रक्ताब्जे रक्तकुमुदे बुधैः कोकनदं स्मृतम्। पद्मादिवृन्तस्य द्विलिङ्गार्थपाठः, (नाला)णल बन्धे।

2 The film or fibres attendent on it. ४३ मृणालं बिसमब्जादि-कदम्बे खण्डमस्त्रियाम् ।1 Assemblage of water lilies

2 The root of a water-lily. करहाटः शिफाकन्दः, किञ्जल्कः केसरोऽस्त्रियाम् ॥

2 A filament.

2 A new leaf of a water-lily. ४४ संवर्तिका नवदलं, बीजकोशो वराटकः ॥ 2 The seed of the lotus

इति वारि-वर्गः ९, अत्र मूलश्लोकाः ४३, क्षे० ॥.

४५ उक्तं स्वर-व्योम-दिक्-काल-धी-शब्दादि स-नाट्यकम्

पातालभोगि-नरकं वारि चैषां च संगतम् ॥

४६ इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने ।

स्वरादि-काण्डः प्रथमः साऽङ्ग एव समर्थितः ॥

इति प्रथमः स्वरादि-काण्डः समाप्तः ।

अत्र मूलश्लोकाः २८१ ॥, क्षे० श्लो० १८, सर्वे च मिलित्वा ॥ २९९ ॥

---

मृद्यतेऽद्यते मृणालम् । विस्यते-उत्कृष्यते विसम् । सनोतेर्डे षण्डः, सत्वाभावोबाहुल-काद् ॥ ४२ ॥ कं रहयतीति, करहान् कूलोत्थान् पद्मादीनटति करहाटः । शिनोति दारयति क्ष्मां शिफा । कन्द्यति कन्दं पद्मादिमूलं, कन्द्यतेन्विष्यते वा, कन्दोस्त्री । किंचिज्जलति जडीभवति किञ्जल्कः । के सरति केसरम् । संवर्तयति वेष्टयति संव-र्तिका, पद्मादीनां नवोद्भिन्नं दलं शरच्चन्द्रिकाख्यम् । बीजानां पद्माक्षाणां कोशो बीजकोशः । वरमटति वराटकः, कर्णिकेत्यर्थः, यच्छाश्वतः—बीजकोशे सरोजस्य कपर्दे च वराटकः (१८०) ॥ ४३ ॥ इति वारिवर्गः ॥ ९ ॥ अथोक्तान्वर्गान् संग्रहे-णोपसंहरति । एषां स्वर्गादीनां संगतं प्रसक्तानुप्रसक्तिकयानुगतं देवासुरमेघादिकं चोक्तम् । शब्दादीति रसबन्धादिग्रहणम् ॥ १ ॥ इति श्रीभट्टक्षीरस्वामिकृतटीका-सहितेऽमरकोशोद्घाटने स्वर्गादि काण्डं प्रथमं संपूर्णम् ।

# द्वितीयं भूम्यादि काण्डम् ।

१ वर्गाः–पृथ्वी-पुर-क्ष्माभृद्-वनौषधि-मृगादि-भिः ।
नृ-ब्रह्म-क्षत्र-विट्-शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥

38 Earth.

२ भूर् भूमिरचला ऽनन्ता रसा विश्वम्भरा स्थिता ।
धरा धरित्री धरणिः क्षोणिर् ज्या काश्यपी क्षितिः ॥

३ सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मा ऽवनिर् मेदिनी मही ॥

४ ' विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
भूतधात्री रत्नगर्भा जगती सागराम्बरा ' ॥

2 Soil.
2 An excellent soil.
1 Fertile with every crop.
2 Salt ground.

५ मृन् मृत्तिका, प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।
उर्वरा सर्व-सस्याऽऽढ्या, स्यादूषः क्षारमृत्तिका ॥

---

श्रीगणेशाय नमः । अथ द्वितीयकाण्डे वर्गान् संगृह्णाति । अङ्गैर्मृदादिभिरुपाङ्गैश्च खिलादिभिः सह वर्तमानैः पृथ्व्यादिभिः संपादिता वर्गा इह वक्ष्यमाणे काण्डे वदितुमारब्धा उदिताः, आदिकर्मणि क्तः ($\frac{३।४।७१}{३०२३}$) आशंसायांभूतवच्च ($\frac{३।३।१३२}{२७९०}$) इति क्तः ॥ १ ॥ भवत्यस्मात्सर्वं भूः, रेफान्तं त्वव्ययं, यथा भूर्भुवः स्वः । रसाः सन्त्यस्यां रस्यते वा रसा । विश्वं बिभर्ति विश्वंभरा, संज्ञायांभृतॄवृजीति ($\frac{३।२।४६}{२९६३}$) खच् । क्षौति भूपं क्षोणी । जिनाति जायते वा ज्या, इज्येति मूर्खव्याख्या, यच्छाश्वतः–ज्यां मौर्वी ज्या वसुन्धरा ( ६२९ ), ज्यापि गौरुच्यते इति निघण्टुः ( २।२।५ ) । कश्यपस्येयं काश्यपी, भार्गवेण जित्वा ह्यस्मै दत्ता । क्षियन्त्येतां क्षितिः, क्षि निवासे ॥ २ ॥ वसु धनं धत्ते वसुधा । उर्वी विस्तीर्णत्वात् । वसु धारयति वसुंधरा । गोत्राः शैलाः सन्त्यस्यां गोत्रा, गास्त्रायते वा । कायति कूयते वा कुः । प्रथते पृथुनावतारिता वा पृथिवी, प्रथेःषिवन्संप्रसारणं च ( उ० १५६ ) । पृथ्वीति, वोतोगुणवचनाद् ( $\frac{४।१।४४}{५०२}$ ) ङीष् । क्षमते भारं क्ष्मा । अवति प्रजा अव्यते वा नृपैरवनिः । दैत्यमेदोयोगान्मेदिनी । महति मही । रत्नवतीति भागुरिः । क्षमा, इला च नानार्थे ॥ ३ ॥ मृद्यते मृत् । ( मृत्तिका ) मृदस्तिकन् ( $\frac{५।४।३९}{२१०७}$ ) स्वार्थे । ( मृत्सा, इ० ) स्वार्थे सस्नौप्रशंसायाम् ( $\frac{५।४।४०}{२१०८}$ ) कृष्णभूमः कृष्णमृत्तिकोदग्भूम उदङ्मृदि । पाण्डुभूमः पाण्डुमृच्च, कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरच् ( $\frac{५०४६}{९४३}$ ) । उर्वति क्षुधमुर्वमियर्ति वा ( उर्वरा ) । ( ऊषः ) ऊष रुजायाम् ॥ ४ ॥ (ऊषरः) ऊषसुषीतिरः ( $\frac{५।२।१०७}{१९९४}$ ) । स्थलति ( स्थलम् ) ।

1 A spot with salt soil.
2 A region devoid of water.
2 Untilled or waste.
5 A world.
1 INDIA.
1 The eastern region.
1 The northern region.
2 A country of barbarians.
2 The region of sanctity.
2 An inhabited country.

६ ऊषवानूषरो द्वावप्यन्य-लिङ्गौ, स्थलं स्थली। 1 A place, or firm spot.
समानौ मरु-धन्वानौ, द्वे खिलाऽप्रहते समे ॥

७ त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्।
लोको ऽयं भारतं वर्षं, शरावत्यास् तु यो ऽवधेः ॥

८ देशः प्राग्-दक्षिणः प्राच्य, उदीच्यः पश्चिमोत्तरः।
प्रत्यन्तो म्लेच्छदेशः स्यान्, मध्यदेशस् तु मध्यमः ॥
2 The middle region.

९ आर्यावर्तः पुण्यभूमिर् मध्यं विन्ध्य-हिमालयोः।
नीवृज् जनपदो, देश-विषयौ तूऽपवर्तनम् ॥ 3 Any country.

---

स्थलयकृत्रिमा चेत्, जानपदकुण्डगोणस्थलेति ($\frac{४।१।४२}{५००}$) ङीष्, कृत्रिमा तु स्थला। म्रियन्ते तृषार्ता अस्मिन्मरुः। दधन्ति धन्वति वा धन्वा। खिलं शून्यं लाति खिलम्। न प्रहन्यते हलादिभिरप्रहतमकृष्टं क्षेत्रादि ॥ ५ ॥ जङ्गम्यते जगत्, वर्तमानेपृषद्बृहदिति (उ० २४१) साधुः, शत्रन्तत्वाद् ङीप्। विशन्त्यस्मिन् विष्टपति वा विष्टपम्, ष्टपस्तप प्रतिघाते। अयं जम्बुद्वीपनवमांशो भरतस्य क्षत्रियस्येदं भारतं नाम ( वर्षं ) भूम्येकदेशः, वृष्यते सिच्यते वर्षम्, तथा च– हिमवान्हेमकूटश्च निषधो मेरुरन्तरे। नीलः श्वेतश्च शृङ्गीवान् गन्धमादनमष्टममिति सीमाविच्छिन्नान्यन्यानीलावृत्तादीन्यष्टौ वर्षाणि। शरावत्या नद्या मर्यादायाः प्राक्सहचरितो दक्षिणो देशः प्राच्यः ॥ ६ ॥ शरावत्या अवधेः पश्चिमेन सहचरित उत्तरो देशः ( उदीच्यः ), यदाह-प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा। विदुषां शब्दसिध्यर्थं सा नः पातु शरावती ( काशिका ) ॥ प्रतिगतोन्तमुक्तावधेः सुटादिदेशः (?) प्रत्यन्तः। ( मध्यमः ) यन्मनुः – हिमवद्विन्ध्ययोरन्तर्यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः (म० २।२१) ॥७॥ आर्या आवर्तन्तेस्मिन्नार्यावर्तः, आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥(मनु० २-२२) नियतं वर्ततेस्मिन् नीवृत्, नहिवृत्तिवृषीति ($\frac{६।३।११६}{१०३७}$) दीर्घः। जनानां पदं जनपदः, पुंस्त्वं लोकात्, जनैर्वास्यमानो राष्ट्राख्योयम्। दिश्यते देशः स्थानमात्रम्। विसिनोति विषयः। उपवर्ततेस्मिन्नुपवर्तनं, उपावर्तनमिति कात्यः। पञ्चैकार्थानाहुः ॥८॥ गोष्ठसंशब्दनात्प्राग्वाच्यलिङ्गाः। तदस्मिन्नस्तीतिदेशेतन्नाम्नि ($\frac{४।२।६७}{१२७९}$), कुमुदनडवेतसेभ्योड्मतुप् ($\frac{४।२।८७}{१३०६}$), नडशादाड्ड्वलच् ($\frac{४।२।८८}{१३०७}$) ॥ ९ ॥

3 One abounding in reeds; 2 -in water lilies. 2 -in ratans; 2 -in green grass.

१० त्रिष्वागोष्ठान्, नडप्राये नड्वान् नड्वल इत्यपि ।
कुमुद्वान् कुमुदप्राये, वेतस्वान् बहुवेतसे ॥

११ शाद्वलः शादहरिते, सजम्बाले तु पङ्किलः । 2 Clayey and muddy.
जलप्रायमनूपं स्यात् पुंसि कच्छस् तथाविधः ॥

3 Watery, or wet. 1 Contiguous to water. 2 Full of stony or similar nodules.

१२ स्त्री शर्करा शर्करिलः, शार्करः शर्करावति । 2 Sandy.
देश एवाऽऽदिमावेवमुन्नेयाः सिकतावति ॥

१३ देशो नद्यम्बु-वृष्ट्यम्बु-संपन्न-व्रीहि-पालितः ।
स्यान् नदीमातृको देवमातृकश् च यथा-क्रमम् ॥

1 Watered (viz. its rice) from a river. 1 Or by rain.

१४ सु-राज्ञि देशे राजन्वान्, स्यात् ततो ऽन्यत्र राजवान् ।
गोष्ठं गोस्थानकं, तत् तु गौष्ठीनं भूत-पूर्वकम् ॥

1 Ruled by a just king. 1 Governed by a monarch. 2 A fold for kine. 1 The site of a former one

---

शादेन शष्पेण नीलः, यच्छाश्वतः–शष्पकर्दमयोः शादः ( ६६१ ) । शीयतेऽस्मिन् शादः, शादोस्त्यस्मिन्शाद्वलो देशः, ड्वलच्, यथा–न हि कोटरसंस्थेऽग्नौ तरुर्भवति शाद्वलः, शाद्वला दूर्वेति च नीलत्वोपचारात् । पङ्कोस्यास्ति पङ्किलः, पिच्छादित्वादिलच् ( लोमादियामादीति ) । अनुगता आपोत्रानूपम्, ऊदनोर्देशे ( ६।३।९८/९४२ ) आकारस्य–ऊकारः, ततो दीर्घः, अप्रत्ययश्च । कषन्त्यापो यं स कच्छः, तथाविधोनूपप्रायः, कच्छमिति माला ॥ १० ॥ देशेलुबिलचौच ( ५।२।१०५/१९१२ ) सिकताशर्कराभ्यांच ( ५।२।१०४/१९११ ) इत्यण्मतुपौ तु सार्वत्रिकौ । तदाह–मध्यान्मः ( ४।३।८/१३७८ ) इत्यत्रादेरित्युपसंख्यानात् ( आदेश्चेतिवक्तव्यम् ) आदिमौ शर्कराशर्करिलौ देशे नियमात् । शर्कराश्मप्राया मृत् । सिकतासिकतिलौ देशे, सर्वत्र तु सैकतः सिकतावांश्च ॥ ११ ॥ नद्यम्बुजातसस्यसंवर्धितो नदीमातृकः । वर्षजव्रीहिवर्धितश्च देशो देवमातृकः, देवोऽभ्रं मातास्येति ॥ १२ ॥ न पूजनात् ( ५।४।६९/९७४ ) इति सुराज्ञीति समासान्ताभावः, राजन्वान्सौराज्ये ( ८।२।१४/१९०२ ) इति साधुः । देशो विषयोपलक्षणम्, यथा– राजन्वाँल्लोक उच्यते । राजमात्रयुक्ते देशे ( राजवान् ) । गावस्तिष्ठन्त्यत्र गोष्ठं, घञर्थेकविधानम् ( २२०४/३२२४ ), अम्बाम्बगोभूमीत्यादिना ( ८।३।९७/२९१८ ) षत्वम् । यत्र गावः प्रागासन् ( गौष्ठीनं ), गोष्ठात्खञ्भूतपूर्वे ( ५।२।१८/१८१९ ) इति खञ् ॥ १३ ॥ परितः सरन्त्यस्मिन्परिसरो ग्रामादेः परिच्छेदभूः । सिन्वन्ति बध्नन्ति तं सेतुः पुलिङ्गः । आलय ( ल्य ) तेम्भोत्रालिः स्त्रीलिङ्गः, सस्यार्थं जलाधारणोयम् । संक्रमस्तु तरणार्थो यन्माला– संक्रमो दुर्गसंचरः । वामं लूयते वामैर्वा वामलूरः । न– अकति नाकुः । वलन्ते प्राणिनोत्र

2 Contiguous ground. १५ पर्यन्तभूः परिसरः, सेतुरालौ स्त्रियां पुमान् । 2 Bridge.

3 An anthill. वामलूरश्च नाकुश्च वल्मीकं पुन्-नपुंसकम् ॥

12 A road, path or way. १६ अयनं वर्त्म मार्गाऽध्व-पन्थानः पदवी सृतिः ।

सरणिः पद्धतिः पद्या वर्तन्येकपदीऽति च ॥

3 A good road. १७ अतिपन्थाः सुपन्थाश्च च सत्पथश्च चाऽर्चितेऽध्वनि ।

5 A bad road. व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥

2 The want of a road. १८ अपन्थास्त्वपथं तुल्ये, शृङ्गाटक-चतुष्पथे । 2 Meeting of four roads.

1 A long and lonesome way. प्रान्तरं दूर-शून्योऽध्वा, कान्तारं वर्त्म दुर्गमम् ॥ 1 A difficult road.

2 A league. 2 A furlong. १९ गव्यूतिः स्त्री क्रोशयुगं, नल्वः किष्कुचतुःशतम् ।

2 A highway. 1 A street. घण्टापथः संसरणं, तत् पुरस्योपनिष्करम् ॥

5 Heaven and earth २० ‘ द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥

3 Salt-sea. दिवस्पृथिव्यौ, गञ्जा तु रुमा स्याल् लवणाकरः ॥

इति भूमि-वर्गः १, अत्र मूलश्लोकाः १८, क्षे० २.

---

वल्मीकम् ॥ १४ ॥ [ अयन्ते ] वर्तन्ते मार्गन्ति–अतन्ति पद्यन्ते सरन्ति वानेनेति वाक्यानि । पद्भ्यां हन्यते पद्धतिः, हिमकाषिहतिषुच ( ६।३।५४/९९२ ) इति पत् । पदमस्मिन्दृश्यं ( ४।४।८७/१६३९ ) इति यति पद्या, पद्यत्यतदर्थे ( ६।३।५३/९९१ ) । एके पादा अस्यामेकपदी कुम्भपद्यादौ कुम्भपदीषुच (५।४।१३९/८७८) साधुः॥ १५॥ (अतिपन्था इ.) न पूजनात् ( ५।४।६९/९६४ ) इत्यत्र स्वतिग्रहणाद्, ऋक्पूरब्धूरिति ( ५।४।७४/९४० ) समासान्तो न भवति । संश्चासौ पन्थाश्च सत्पथः, समासान्तोऽच् । विरुद्धोध्वा व्यध्वः, उपसर्गादध्वनः (६।३।१०१/९७२७) इत्यच् । विरुद्धः पन्था विपथः । कुत्सितोध्वा पन्थाश्च ( कदध्वा, इ० ), कोःकत्तत्पुरुषेचि ( ५।४।८५/९५३ ) कापथ्यक्षयोः ( ६।३।१०४/१०२७ ) । विपथं कापथं च क्लीबमाहुः, यद्वामनः–पथः संख्याव्ययादे संख्याव्ययपूर्वकस्य पथः क्लीबता इति ॥ १६ ॥ ( अपन्थाः ) पथोविभाषा ( ५।४।७२/९५७ ) इत्यच्, अपथं नपुंसकम् ( २।४।३०/८१५ )। शृङ्गैरटन्ति–अस्मिञ्छृङ्गाटकम् । संस्थानकं ( संस्थानं ) चत्वरं च । प्रगता अन्तरेस्मात्प्रान्तरं दूरशून्यो मार्गः । कस्याम्भसोन्तमृच्छति कान्तारम् । कान्तारप्रान्तरे एकार्थे आहुः ॥ १७ ॥ ( गव्यूतिः ) गोर्यूतौ-छन्दस्युपसंख्यानं ( ६।१।७९/६३ ) अध्वपरिमाणेच ( ६।१।७९/६३ ) इत्यवादेशः । (नल्वः) णल गन्धे ( बन्धे ), किष्कुर्हस्तस्तेषां चतुःशती नल्वमिति माला, कात्यस्तु नल्वं [विंश] हस्तशतमाह । घण्टोपलक्षितानां हस्तिनां पन्था घण्टापथः, चाणक्योक्तोऽष्टदण्डः । सम्यक्सरन्त्यनेन संसरणं, यद्दुर्गः–बुधैः संसरणं वर्त्म गजादीनामसंकुलम् । पुरोपनिष्करं चोक्तम्–। तत्संसरणं पुरं राजधानी तस्या उपनिष्कराख्यमुपनिष्कीर्यतेत्र सैन्यमिति ॥ १८ ॥ दिवः पृथिव्याः संज्ञेयं ॥२०॥ इति भूमिवर्गः । १ ।

## अथ पुर-वर्गः २

| | |
|---|---|
| 7 A town or city. | १ पूः स्त्री पुरी-नगर्यौ वा पत्तनं पुटभेदनम् । |
| 1 A suburb. | स्थानीयं निगमो, ऽन्यत् तु यन् मूल-नगरात् पुरम् ॥ |
| 2 The abode of harlots. 2 A market. 2 A shop. | २ तच्छाखानगरं, वेशो वेश्याजनसमाश्रयः । आपणस् तु निषद्यायां, विपणिः पण्यवीथिका ॥ |
| 3 A high street. 2 Heap of earth. 3 A rampart. 1 A bound hedge. | ३ रथ्या प्रतोली विशिखा; स्याच् चयो वप्रमस्त्रियाम् । प्राकारो वरणः सालः, प्राचीनं प्रातन्तो वृतिः ॥ |
| 2 A wall. 1 One built with rubbish. 16 A house. | ४ भित्तिः स्त्री कुड्यमेडूकं यदन्तर-न्यस्त-कीकसम् । गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ |

---

पक्षे तु पुरं नगरं च वाशब्दात्पत्तनसाहचर्यात्क्लीबे । पूर्यते पूः । नगाः सन्त्यस्य नगरं, नगपांसुपाण्डुभ्यो रः ( $\frac{३।१।९९}{१९२४}$ )। पतन्त्यस्मिन्पत्तनम् । पुटा भाण्डवासनानि भिद्यन्तेस्मिन् पुटभेदनम् । तिष्ठन्त्यस्मिन्नित्यष्टशतग्रामीमध्ये स्थानीयम् । नियतं गच्छन्त्यस्मिन्निगमः, गोचरसंचरेति ( $\frac{३।३।११९}{३२९८}$ ) साधुः । नानार्थेऽधिष्ठानं, दुर्गकोट्टौ राजधानी च । मूलनगरं राजधानी ततोऽन्यत्समुदायस्थानं ( शाखानगरं ), शाखेत्युपाङ्गोपलक्षणम् ॥ १ ॥ [ स्यात्साकेतमयोध्यायां विदेहा मिथिला पुरी । महोदया कन्यकुब्जा कान्यकुब्जं महोदयम् ॥ काशी वाराणस्यवन्ती विदिशा चोज्जयिन्यपि । प्राग्ज्योतिषं कामरूपं द्वारकाः द्वारवत्यपि ॥ ] विशन्त्यस्मिन्कामुका वेशः । आपणन्तेऽस्मिन्नापणः, गोचरसंचरेति ( $\frac{३।३।११९}{३२९८}$ ) साधुः । निषीदन्त्यस्यां निषद्या, संज्ञायां-समजनिषदेति ( $\frac{३।३।९९}{३२७६}$ ) क्यप् । विपण्यन्तेऽस्यां विपणिर्वणिग्वीथी । आद्यौ वणिक्स्थानेऽन्यौ हट्टवर्तन्यामाहुः, यच्छाश्वतः–आपणः पण्यवीथी च द्वयं विपणिसंज्ञकम् ( ३२५ ) ॥ २ ॥ रथं वहति रथ्या, तद्वहतिरथयुगेति ( $\frac{४।४।७६}{१६२७}$ ) यत् । प्रतोल्यते प्रतोली । विगतशिखा मुण्डितेव सन्मताद्विशीर्यते जनसंमर्दैन वा विशिखा । विपण्यादीन्पञ्चैकार्थानाहुः, यत्कौटिल्यः –विशिखायां सौवर्णिकप्रचारः ( २-१४ )। चीयते चयः प्राकाराधारः । उप्यतेऽस्मिन्वप्रः। प्रक्रियते प्राकारः, सादकारयोः कृत्रिम-इति ( वा० ? ) दीर्घः । वृणोति वरणः । स्यति पर्यन्तं करोति सालः । प्रागेव प्राचीनं विभाषाञ्चेरदिक्स्त्रियाम् ( $\frac{५।४।८}{२०८७}$ ) इति खः, प्राचीरमित्येके । व्रियतेऽनया वृत्तिः। वाटो वाटी–आवेष्टकोऽपि ॥ ३ ॥ भिद्यते भित्तिः । कुड्यां साधु कुड्यं, पृषोदरादित्वात् ( $\frac{६।३।१०९}{१०३४}$ ) डत्वम् । तत्कुड्यमन्तर्न्यस्तास्थि, एड्यत एडूकम् । गृह्णाति गृहं, गेहे कः ( $\frac{३।१।१४४}{२९०६}$ ) उदवसिनोति स्मोर्ध्वमवसीयते वोदवसितम् । विशन्त्यस्मिन् वेश्म । सीदन्त्यस्मिन्सद्म सदनम् । निकेत्यतेऽस्मिन्निकेतनम् ॥ ४ ॥

५ निशान्तं-पस्त्य-सदनं भवनाऽगार-मन्दिरम् ।
गृहाः पुंसि च भूम्न्येव निकाय्य-निलयाऽऽलयाः ॥

4 Audiance hall.
2 A cluster of four houses.
2 A hut made of leaves.

६ वासः कुटी द्वयोः शाला सभा, संजवनं त्विदम् ।
चतुःशालं, मुनीनां तु पर्णशालोटजो ऽस्त्रियाम् ॥

2 Buddhisti.
2 A working house.
2 A place of refreshment.
2 A stable.

७ चैत्यमायतनं तुल्ये, वाजिशाला तु मन्दुरा ।
आवेशनं शिल्पिशाला, प्रपा पानीयशालिका ॥

1 A college.
2 A tavern.
2 Middle of a house.
2 Labor room.

८ मठश्छात्राऽऽदि-निलयो, गञ्जा तु मदिरागृहम् ।
गर्भागारं वासगृहमरिष्टं सूतिकागृहम् ॥

1 Pavement.
2 Terrace.
2 A window or airhole.
2 A temporay hall.

९ ' कुट्टिमोऽस्त्री निबद्धा भूः, चन्द्रशाला शिरोगृहम् ' ।
वातायनं गवाक्षो, ऽथ मण्डपोऽस्त्री जनाश्रयः ॥

---

निशाम्यन्त्यस्मिन् निशान्तं, निशाया अन्तोत्रेत्येके । अपस्त्यायति संघातीभवति पस्त्यम् । भवन्त्यस्मिन् भवनम् । अग्यतेस्मिन्नगारं, अगान्वृक्षान्नियर्ति वा । मन्द्यते सुप्यतेत्र मन्दिरम् । ( गृहाः ) भूम्नि बहुत्वे, गृहाणीत्यप्याहुः । निचीयते निकाय्यः, पाय्यसान्नाय्यनिकाय्येति ( ३।१।१२९/२८९७ ) साधुः । निलीयन्तेस्मिन्निलयः । आलीयन्तेस्मिन्नालयः, पुंसिसंज्ञायांघः (३।३।११८/३२९६) ॥ ५ ॥ उष्यतेस्मिन्वासः । कुट्यतेस्यां कुटी । शा(श)लन्त्यस्यां शाला, शालते वा । सह भान्त्यस्यां सभा । वसतिर्वासतेयी निवेशनमावसथः संस्त्यायोपि । सजन्ति संजवन्ते वास्मिन्सजवनम् । चतस्रः शालाः समाहृताश्चतुःशालम् । इदं गृहं मुनिसंबन्धि पर्णशालाख्यम् । उटैर्देश्यां तृणपर्णैर्जायत उटजम् ॥ ६ ॥ चित्याया इदं चैत्यं देवकुले[ ल ]महावृक्षोध्वगा[ वृक्षाद्युपा ]-श्रयः । आयतन्तेस्मिन्नायतनम् । मन्दन्तेत्र मन्दुरा । आविशत्यावेशनं गृहादन्यत्कारूणां कर्मस्थानं, तेन शिल्पशालेति सभ्यः पाठः । प्रपिबन्त्यस्यां प्रपा, घनर्थे कविधानम् ( वा० २२२४/३२३४ ) ॥ ७ ॥ मठ्यतेस्मिन्मठः, मठ निवासे । छत्त्रशीलाः विद्यार्थिनश्छात्त्राः, छत्त्रेण गुरुसेवा लक्ष्यते, छत्त्रादिभ्योणः ( ४।४।६२/१६१२ ) । सत्त्रशाला प्रतिश्रयश्च । बौद्धानां तु विहारोस्त्री । गञ्जन्ति रटन्त्यस्यां क्षीबा गञ्जा । वासाय वासमध्ये वा गृहम्, अपवरकं कोष्ठम् । न रिष्यते हिंस्रैः कृतरक्षत्वादरिष्टम् ॥ ८ ॥ गवामिवाक्षीणि यत्रेति गवाक्षः, इन्द्राक्षयोः समासेचेत्यवङ् ( ६।१।१२२/८८ ३।१।२४/८९ )। इन्द्रकोशो मतङ्गकः, [ मत्तालम्बोपाश्रयः स्यात्प्रग्रीवो मत्तवारणः ] । मण्ड्यते नानालोकैर्मण्डपः । हरति मनो हर्म्यम् । आदिशब्दाद्भासगृहादि । वास इत्येव, प्रसीदन्त्यस्मिन्प्रासादः, सादकारयोःकृत्रिमइति ( वा० ? )

1 The abode of the wealthy. 1 A royal residence. 4 A king's house.

१० हर्म्यादि धनिनां वासः, प्रासादो देव-भूभुजाम् ।
सौधो ऽस्त्री राजसदनमुपकार्योपकारिका ॥

4 Its varities.

११ स्वस्तिकः सर्वतोभद्रो नन्द्यावर्ताऽऽदयो ऽपि च ।
विच्छन्दकः प्रभेदा हि भवन्तीऽऽश्वर-सद्मनाम् ॥

4 The queen's apartment. 2 An airy room, a top of the house.

१२ स्त्र्यऽगारं भूभुजामन्तःपुरं स्यादवरोधनम् ।
शुद्धान्तश्च चाऽवरोधश्च च, स्यादट्टः क्षौमम-स्त्रियाम् ॥

3 A terrace before the house-door. 2 The threshold. 3 A court or yard.

१३ प्रघाण-प्रघणाऽलिन्दा बहिर्-द्वार-प्रकोष्ठके ।
गृहावग्रहणी देहल्यङ्गणं चत्वराऽजिरे ॥

1 The lower threshold of door. 1 Upper threshold. 2 A private door. 2 A back door.

१४ अधस्ताद् दारुणि शिला, नासा दारूऽपरि स्थितम् ।
प्रच्छन्नमन्तर्द्वारं स्यात्, पक्षद्वारं तु पक्षकम् ॥

2 The edge of the thatch. 2 Roof. 2 The wood of a thatch.

१५ वलीक-नीध्रे पटल-प्रान्ते, ऽथ पटलं छदिः ।
गोपानसी तु वलभी छादने वक्र-दारुणि ॥

---

दीर्घः ॥ ९ ॥ सुधाशुभ्रं सौधम् । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनम् । स्वस्ति कायति स्वस्तिकः । नन्दी-आवर्तोऽत्र नन्द्यावर्तः । आदिशब्दाद्रुचकवर्धमानाद्याः ॥ १० ॥ विच्छर्दकप्रभेदा रचनाविशेषाः, उच्छ्रूदिर्दीर्घौ, विशिष्टेच्छानिर्मितो विच्छन्दक इत्येके । स्त्रीणामगारं, अवरुध्यन्तेऽस्मिन्नवरोधनम् ॥ ११ ॥ शुद्धाः सुरक्षा अन्ता अत्र शुद्धान्तः । एते महिष्यामपि तात्स्थ्याद्वर्तन्ते । अट्टन्त्यट्टस्य [ ट्टयते ] त्र वाट्टोट्टालकः, अट्ट अतिक्रमहिंसयोः, प्राकाराग्रे रणगृहमिति कौटिल्यः । ( क्षोमः ) क्षुवन्ति शब्दायन्ते योधाः ( अत्र ), अतः क्षौमः प्राकारधारणार्थोऽभ्यन्तरः क्षोमाख्य इत्येके । प्रहण्यते प्रघणः प्रघाणः, अगारैकदेशेप्रघणःप्रघाणश्च ( ३।३।७९ / ३।२।५६ ) । अल्यते भूष्यतेलिन्दः। द्वारप्रकोष्ठाद्बहिर्द्वाराग्रवर्तिचतुष्किकान्ते-उपालिन्दकाख्या ॥१२॥ द्वाराग्रं गृह्यते यथा, वीथ्याख्येत्येके, बुध्नोदुम्बरमिति सभ्यार्थः । अवगृह्यते द्वारशाखानयावग्रहणी । दिह्यते देहली । अङ्गत्यत्राङ्गनम् । चत्यते चत्वरम् । अजन्त्यत्राजिरम् । स्तम्भादीनामाधारदारु शिलाख्यं, स्तम्भोर्ध्वं दार्वन्तरस्थापनार्थं यदासज्यते सा शिलेति गौडः । स्तम्भादेरित्यर्थः, द्वारशाखाधऊर्ध्वदारुणी शिलानासे इति माला, यदाह-नासा दारूपरि द्वारस्याधो दारु शिला स्त्रियाम् । ऊर्ध्वोदुम्बरमुत्तरासङ्गोध-उदुम्बरं देहलीत्याचार्याः ॥ १३ ॥ ( प्रच्छन्नं ) खडक्किकाख्यम् । पार्श्वद्वारमेकमतादिति कात्यः, यदाह-प्रच्छन्नमन्तर्द्वारं यत्पक्षद्वारं तदुच्यते । छादनान्तो वलीकाख्यः, वलति संवृणोतीति, कुड्याद्बहिर्वीथी येन च्छाद्यते । नियतमिन्द्ध नीयते वाम्भोनेन नीध्रम् । पटं लाति पटलम् । छाद्यतेनेनेति छदिः, इसन्तः क्लीबे, इस्मन्त्रन्क्विषु च ( ६।४।९७ / ३।७।७५ ) इति ह्रस्वः ॥१४॥ गोपायति गोपानसी । पटलाधारो वंशपञ्जरो वलभी

2 A dovecot.
3 A door, or gate.
2 A covered terrace in the yard.

१६ कपोतपालिकायां तु विटङ्कं पुन्-नपुंसकम् ।
स्त्री द्वार् द्वारं प्रतीहारः, स्याद् वितर्दिस् तु वेदिका ॥

2 Decoration of the gatepost.
1 A raised place over the gate.

१७ तोरणो ऽस्त्री बहिर्द्वारं, पुरद्वारं तु गोपुरम् । 1 A city gate.
कूटं पूर्-द्वारि यद्धस्तिनखस् तस्मिन्नथ त्रिषु ॥

2 A door.
1 Its bolt or bar.
2 Stairs.
2 A ladder.

१८ कपाटमररं तुल्ये, तद्-विष्कम्भो ऽर्गलं न ना ।
आरोहणं स्यात् सोपानं, निश्रेणिस् त्वधिरोहिणी ॥

2 A broom.
2 Dust, or sweepings.
2 The entrance of a house.

१९ संमार्जनी शोधनी स्यात्, संकरो ऽवकरस् तथा ।
क्षिप्ते, मुखं निःसरणं, संनिवेशो निकर्षणम् ॥

2 An open space in a town.

---

वलभ्याश्चूडा वा, वल संवरणे । विशिष्टं टङ्क्यते विटङ्कः, पक्षिविश्रामार्थं बहिर्निर्गमितं दारु, वक्रदार्वाधारः, पक्षिपङ्क्तिर्हि तत्रोत्कीर्यते ॥ १५ ॥ प्रतिह्रियन्ते प्रतिरुध्यन्तेऽनेन प्रतीहारः । नानार्थे वलजम् । दारुपरिष्कृता चतुरस्रा विश्रान्तिभूः, विगतं तर्दनं यत्रेति वितर्दिः । विदन्त्यस्यां वेदी । मङ्गलार्थं तुरन्त्यत्र तोरणं द्वाराग्रे स्तम्भोपरि रचितं सिंहद्वाराख्यम् मङ्गलस्रक्तोरणोर्ध्वे भवेद्वन्दनमालिका । गोप्यते गोपुरं प्रतोली ॥ १६ ॥ दुर्गद्वारावतरणार्थः क्रमनिम्नो हस्तिनखाभो मृत्कूटः–अपसोपानाख्यः ( कूटम् ), बहिरतटमन्तःसोपानयुक्तं युद्धार्थमित्येके । कं शिरः पाटयति प्रविशतां कवाटो द्वारपट्टः, जपादित्वाद्वत्वम् ( ग०? ) । इयर्त्यररं, अररि च । विष्कम्भो बन्धनिमित्तं, विष्कम्नात्यवष्टम्नात्यावश्यम् । विष्कम्भीत्येके पेठुः । अरेणाकर्षणेन गलत्यर्गलं दारुमयो लोहो वा दण्डः । न ना पुमान्न भवति । परिघश्च ॥ १७ ॥ आरुह्यतेवरुह्यते वानेनारोहणम् । सहोपानमस्त्यस्मिन् सोपानम् । निश्रयति भित्तिं नियता श्रेणिः सोपानपङ्क्तिर्वात्र निश्रेणिः । अधिरोहन्त्यवरोहन्ति च यया दारुमय्या साधिरोहणी । बहुलाख्या रजोवारणी, मार्जन्या पूतं हि बहुलीकृतं धान्याद्याहुः । समूहनी पवनीति स्मार्ताः । बहुकरी वर्धनी च । ( क्षिप्ते ) धूल्यादाविति शेषः । अवकीर्यतेवकरः ॥ १८ ॥ गृहादेर्निःस्रियते प्रविश्यते च येन तन्मुखं, यत्कौटिल्यः– ( २।३।२१ ) मुखसमः संक्रमो मुखानुवादेन निःसरणविधिर्वा । समन्तान्निविशन्तेत्र संनिवेशः पुरादेर्बहिर्विहरणभूः । निवृत्तं कर्तणमत्र निकर्षणः । संवसन्त्यत्र संवसथः । ग्रस्यते भोगिभिर्ग्रामः । द्रगं ग्रामधानं खेटकं च । वसन्त्यस्मिन्वास्तुः, वसेस्तुन् (उ. ७८) अगारेणिच्च (उ. ७९) ॥१९॥ अन्ते चिह्नार्थं शल्यप्रक्षेपादुपशल्यं, उपशलने समीपश्रपणे साधु वा । सीयते बध्यते सीमा, [ मनः ] ($\frac{३।२।८२}{२९९२}$) डाबुभाभ्यामन्यतरस्याम् ( $\frac{४।१।१३}{४६१}$ ) सीम्न्याघाटकरौ ( ? ) मालकोञ्ची ग्रामान्तराटवी । घोषन्ति

2 A village.
2 The site of a abitation.
2 Space near a village, &c.

२० समौ संवसथ-ग्रामौ, वेश्मभूर् वास्तुर-स्त्रियाम् ।
ग्रामान्त उपशल्यं स्यात्, सीम-सीमे स्त्रियामुभे ॥

2 A boundary or limit.

2 A station of erdsmen.
2 An abode of the owest men.

२१ घोष आभीरपल्ली स्यात्, पक्कणः शबरालयः ।
इति पुर-वर्गः २, अत्र मूलश्लोकाः २०, क्षेपकश्लो० ॥

---

## अथ शैल-वर्गः ३

13 A mountain.

महीध्रे शिखरि-क्ष्माभृदहार्य-धर-पर्वताः ॥
१ अद्रि-गोत्र-गिरि-ग्रावाऽचल-शैल-शिलोच्चयाः ।

2 A range, surrounding the earth.

लोकालोकश् चक्रवालस्, त्रिकूटस् त्रिककुत् समौ ॥

2 A hill with three peaks.

2 The western mountain.

२ अस्तस् तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ।

2 The eastern mountain.

1 Divers mountains.

हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रकः ॥
३ गन्धमादनमन्ये च हेमकूटाऽऽदयो नगाः ।

7 A stone or rock.

पाषाण-प्रस्तर-ग्रावोपलाऽश्मानः शिला दृषत् ॥

---

गावोत्र घोषः । आबिभ्यत्यभित ईर्यन्ति वा गा आभीरा गोपाः । पल्ल्यते पल्लिः– गृहालिः, कुटिग्रामकयोः पल्लिरिति तु शाश्वतः ( ६७८ ) । पच्यतेस्मिन् पक्कणः । शवन्ति भ्रमन्ति शवरा आरण्यचाण्डालाः ॥ २० ॥ इति पुरवर्गः । २ ।

---

महीं धारयति महीध्रः, मूलविभुजादित्वात्कः ( कप्रकरणेमूलविभुजादिभ्य-उपसंख्यानम् ) । हर्तुमशक्योहार्यः । ध्रियते धरः । पर्वाणि सन्त्यस्य पर्वतः, तप्पर्वमरुद्भ्याम् ( वा० $\frac{३।२।१}{१९२८}$ ) अद्यतेद्रिः । गां त्रायते गोत्रः । गीर्यते गिरिः । शिलानामयं शैलः, मत्वर्थेवाण् (अण्च) ॥ १ ॥ अन्तर्लोक्यते बहिश्च न लोक्यतेनर्कत्वाल्लोकालोकः । चक्राकारेण वलते वा चक्रवाडः, वाडृ आप्लाव्ये, आवेष्ट्य द्वीपान् स्थितो ह्यसौ । त्रिककुत्पर्वते ($\frac{५।४।१४७}{८८५}$) इति साधुः । अस्यत्यर्कादीनस्यते वास्तः। चरन्त्यत्र चरमः पाश्चिमो मन्दराख्यः। उदयन्तेस्माद् ग्रहा उदयः ॥२॥ नियतं सीदन्त्यस्मिन् निषधः । वि-इध्यते विन्ध्यः,अध्न्यादिः (उ० ५५१) माल्याकारता-स्यास्ति माल्यवान् । परियात्रायां भवः पारियात्रिकः स्वारोहत्वात् । गन्धेन मादयति गन्धमादनम्, [ प्रयोगे च पुंलिङ्गता दृश्यते, सुगन्धिर्गन्धमादनः । ( कु. ६–४६ ) इति कालिदासः ] । आदिशब्दान्मलयमन्दराद्याः । हिमाचलोऽद्रिराजः स्यान्मलय-

3 A peak or summit. 3 A precipice. 1 The side of a mountain. 3 Table land. 2 A fountain. 3 A cascade. 2 An artificial cave. 2 A natural cave. 2 Rocks fallen from a mountain. 1 Rocks fallen slanting. 2 A mine. 2 Hills near a mountain. 1 Land near a mountain. 1 Land on it. 1 A fossil, or mineral. 1 Red chalk. 2 A place overgrown with creepers, &c.

४ कूटो ऽस्त्री शिखरं शृङ्गं, प्रपातस् त्वतटो भृगुः ।
कटको ऽस्त्री नितम्बो ऽद्रेः, स्नुः प्रस्थः सानुर-स्त्रियाम् ॥
५ उत्सः प्रस्रवणं, वारिप्रवाहो निर्झरो झरः ।
दरी तु कन्दरो वा स्त्री, देव-खात-बिले गुहा ॥
६ गव्हरं, गण्डशैलास् तु च्युताः स्थूलोपला गिरेः ।
' दन्तकास् तु बहिस् तिर्यक्-प्रदेशान् निर्गता गिरेः ॥
७ खनिः स्त्रियामाकरः स्यात्, पादाः प्रत्यन्तपर्वताः ।
उपत्यका ऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥
८ धातुर् मनःशिलाद्यद्रेर् गैरिकं तु विशेषतः ।
निकुञ्ज-कुञ्जौ वा क्लीबे लताऽऽदि पिहितोदरे ॥
इति शैल-वर्गः ३, अत्र मूलश्लोकाः ८, क्षे० ॥

---

श्चन्दनाचलः ॥३॥ पिनष्टि, प्रस्तृणाति, गिरति, उपलाति, अश्नाति, शिनोति, दणातीति वाक्यानि । कूट(य)ति कूटं, कूट्यते वार्कदावाभ्याम्, कूट दाहे । शिखास्यास्ति शिखरं, शिखायाहस्वश्चेतिरः ( वा० ? ) । शृणाति शृङ्गम् । प्रपतत्यस्मात्प्रपातः । तटशून्योऽतटः । प्रपातस्तु तटो भृगुरिति पाठे प्रपत्यते यतस्तटात्स भृगुः । बिभर्ति भृज्ज्यते वा भृगुः ॥ ४ ॥ कटत्यावृणोति कटको मध्यभागो मेखलाख्यः । स्नौत्यम्भः स्नुः । प्रतिष्ठतेस्मिन्समभूभागत्वात्प्रस्थः, घजर्थे कविधानम् (वा० $\frac{३२०४}{३२३४}$)। सनोति ददाति सुखं सानुः । द्विरवाप्रस्थोप्यस्त्री । उनत्त्यम्भसा उत्सः । प्रस्रवत्यस्मात् प्रस्रवणम् । निर्झीर्यते निर्झरः । प्रतताम्बु[ नि ]र्झीर्यते निर्झरझरावित्येके ॥ ५ ॥ दीर्यते दरी, पचादित्वादच् ( नन्दिग्रहेति ) । कुत्सितं दीर्यते कं दृणाति वा कन्दरा, पक्षे रूपात्पुमान् कन्दरोपि । समे इत्यर्थः, देवखातमकृतकं, ( बिलं ) बिल भेदने । गूहति गुहा । अगे ह्वरति गाह्यते वा गह्वरम् । अकृतकबिलविषये गुहा गह्वरं चेत्येके पूर्वेण सह संबध्नन्ति, यत्कात्याः–देवखाते बिले गुहा, शाश्वतोऽप्याहगह्वरं बिसदम्भयोः ( ६५६ ) । गण्डाः शैला इव स्थूलत्वाद् गण्डशैलाः, (च्युताः) भूकम्पादिना गलिताः ॥६॥ खन्यन्ते लोहादयोस्याः खनिः खानिश्च । आकीर्यन्ते धातवोस्मिन्नाकरः। गञ्जापि, यच्छाश्वतः–भाण्डागारं विदुर्गञ्जं खनौ गञ्जा सुरागृहे (४०४) । मुख्यपर्वतान्ते क्षुद्रपर्वताः पादा इवाधःस्थत्वाच्चरणाच्च । अद्रेर्भूमिरित्येव, उपाधिभ्यांत्यकन्नासन्नारूढयोः ( $\frac{५।२।३४}{१८३५}$ ), नयासयोः ( $\frac{७।४।४५}{४६४}$ ) इत्यत्र त्यकनः–( त्यकनश्चनिषेधः ) उपसंख्यानादित्वाभावः ॥ ७ ॥ धत्ते धातुः । आदिशब्दाद्धिङ्गुलादि, यदाहुः–सुवर्णरूप्य-

## अथ वनौषधि-वर्गः ४

| | |
|---|---|
| 6 A forest or grove | १ अटव्यरण्यं विपिनं गहनं काननं वनम् । |
| 2 A large forest. | महारण्यमरण्यानी, गृहारामास् तु निष्कुटाः ॥ |
| 2 Garden. | २ आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । |
| 1 One planted by a state minister, &c. | अमात्य-गणिका-गेहोपवने वृक्षवाटिका ॥ |
| 2 A royal public one. | ३ पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् । |
| 1 Queen's pleasure ground. | स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ |
| 5 A row or range. 2 A continuous line. | ४ वीथ्यालिरावलिः पङ्क्तिः श्रेणी, लेखास् तु राजयः । |
| 2 A multitude of groves. 2 A germin. | वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ |
| 13 A tree. | ५ वृक्षो महीरुहः शाखी विटपी पादपस् तरुः । |
| | अनोकहः कुटः शालः पलाशी द्रु द्रुमाऽऽगमाः । |

ताम्राणि हरितालं मनःशिला ॥ गैरिकाञ्जनकासीससलोहसीसाः सहिङ्गुलाः ॥ गन्धकोभ्रकमित्याद्या धातवो गिरिसंभवाः ॥ विशेषेण धातुर्धातुशब्देनैव प्रसिद्धेः, गैरिकं हेमेत्येके, गिरौ भवमिति गिरिणाविग्रहोगिरिकादण् । स्थान इति शेषः । कुञ्जरावरणार्थौ लोकात् । व्याधिकरणे सप्तम्यौ ॥ ८ ॥ इति शैलवर्गः । ३ ।

अटन्त्यस्यामटवी । इयर्ति आम्यन्त्यत्रारण्यम् । वेपन्ते भयेनात्र विपिनं, वेपितुह्योर्ह्रस्वश्च ( उ० २१० ) इतीनन् । गाह्यते गहनम् । कन्यते गम्यतेस्मिन्काननम् । कन्यते सेव्यते वनं वृक्षबहुलं स्थानम् । पूर्वैः सहानयोरैक्यमाहुः । सत्त्रं नानार्थे । हिमारण्ययोर्महत्त्वेङीषानुकौ ( वा० २४७२/४।१।४९ ) । कुटाद् गृहान्निष्क्रान्ता निष्कुटाः ॥ १ ॥ आरमन्त्यस्मिन्नारामः । करणेन निर्वृत्तः कृत्रिमो वृक्षसमूहः । समीपं वनस्योपवनम्, तुल्यत्वेन नैकट्यात् । अमात्यगणिकयो रुपलक्षणार्थत्वात्सार्थवाहादीनामपि ॥ २ ॥ आक्रीडन्त्यस्मिन्नाक्रीडः । उद्यान्त्यस्मिन्नुद्यानम् । साधारणं राज्ञीभिः सह । प्रमदार्थं वनं प्रमदानां वा प्रमदवनम्, ङयापोः संज्ञाछन्दसोर्बहुलं ( ६।३।६३ ) इति ह्रस्वः । अन्तःपुरं तत्स्था देव्यः ॥३॥ वियन्त्यनया वीथिः । आलात्यालिः । आवलत्यावलिः । पच्यते पङ्क्तिः । श्रीयते श्रेणिः । सान्तरा पङ्क्तिर्निरन्तरा लेखा, यदाह मूले—लेखास्तु राजय इति । लिख्यन्ते लेखाः । राजन्ते राजयः, पङ्क्त्यपङ्क्तिसाधारणाः । (वन्या) पाशादिभ्यो यः ( ४।२।४९ ) । अङ्क्यतेऽङ्कुरः, अकि लक्षणे । उद्भिद्यत उद्भित् । प्ररोहोपि ॥ ४ ॥ वृश्च्यते छिद्यते वृक्षः, वृक्षति वृणोति वा । शाखी, व्रीह्यादौ ( व्रीह्यादिभ्यश्च ) । पादैर्मूलैः पिबति पादपः, एवमङ्घ्रिपः [ चरणपश्च प्रसिद्धः ] । [ तर-

1 Its nut, called Betel-nut.
1 Pandanus.
1 Carypha.
1 Wild date tree.

१७० फलमुद्वेगमेते च हिन्ताल-सहितास् त्रयः । 3 Marshy date tree.
खर्जूरः, केसरी, ताली, खर्जूरी, च तृणद्रुमाः ॥ 1 A Palm.

इति वनौषधि-वर्गः ४, अत्र मूलश्लोकाः १७० ॥, क्षे०.

## अथ सिंहादि-वर्गः ५

14 A lion. १ सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।
' कण्ठीरवो मृगरिपुर् मृगदृष्टिर् मृगाशनः ।
पुण्डरीकः पञ्चनख-चित्रकाय-मृगद्विषः ॥ १॥ '
3 A tiger. 2 A hyena. शार्दूल-द्वीपिनौ व्याघ्रे, तरक्षुस् तु मृगादनः ॥
12 A hog. २ वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥
9 A monkey or ape. ३ कपि-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखाः ।
मर्कटो वानरः कीशो वनौका, अथ भल्लुके ॥

---

खपुरः कारपत्त्रशाखः ॥ १६९ ॥ अस्य पूगस्य फलमुद्गतो वेगोस्योद्वेगं स्रंसकत्वात् । पूगादयो हि फलवृत्तयः क्लीबे, फलेलुक् ( ४।३।१६३ / १५४१ ) बोण्टा तु, हरीतक्यादिभ्यश्च ( ४।३।१५७ / १५४६ ) इति लुपा, लुपियुक्तवद्व्यक्तिवचने ( २।१।५३ / १२९४ ) इति वृक्षे फले च स्त्रियामेव । एते तालनालिकेरपूगास्त्रयो हिन्तालेन चतुर्थेन सहिताः खर्जूराद्याश्चत्वारस्तृणप्रधाना वृक्षाः । ताली जात्यन्तरम् । एवं खर्जूरी भूमिखजरः । हिनोति वर्धते हिन्तालः । खर्जूरः, खर्ज व्यथने । केत्यते ज्ञायते गन्धेन केतकी । तालयति ताली ॥ १७० ॥ इति वनौषधिवर्गः । ४ ।

---

हिनस्ति सिंहः । मृगाणां द्वीप्यादिशशकान्तानामिन्द्रः । पञ्चास्यो विस्तृतास्यः, पचि विस्तारवचने, कर्मणि घञर्थेकविधानम् (वा० ३।३।५८ / ३।२।९४ ), मुखपादैर्योद्धृत्वाद्वा । हर्यक्षः । अत एव हरिः, हरत्याकर्षति वा । कण्ठीरवो देश्याम् । शृणाति शार्दूलः । द्वौ वर्णावीयते द्वीपोस्त्यस्य वा । तन्निवासित्वाद् द्वीपी । व्याजिघ्रन् हन्ति व्याघ्रः । चित्रकायः पञ्चशिखश्च । तरं क्षिणोति मार्गं रुणद्धि तरक्षुः-आरण्यः श्वा, तरक्ष इत्येके । वृकोऽपि ॥१॥ वरमाहन्ति वराहः । सूयतेत्यर्थं सूकरः । घर्षति घृष्टिः । पीनत्वात्कोलः, कुल संस्त्याने । पोत्रं मुखाग्रमस्यास्तीति पोत्री । किरति क्ष्मां किरः, इगुपधेति ( सू० ) कः । केटति किटिः, किट गतौ । क्रुड घनत्वेस्मात्क्रोडः, क्रोडः कुद्दालो मुस्तादो दंष्ट्रास्त्रो मुखलाङ्गल इति दुर्गः ॥ २ ॥ कम्पते चलति कपिः । प्लवैर्गच्छति प्लवगः प्लवंगोऽपि, गमेःसुपि (वा० २००९ / ३।२।९६) खच्चडित् (वा० २०११ / ३।२।९८)

| | |
|---|---|
| 4 A bear.<br>3 A rhinoceros. | ४ ऋक्षाऽच्छभल्ल-भल्लूका, गण्डके खड्ग-खड्गिनौ । |
| 5 A buffalo. | लुलायो महिषो वाहद्विषत्-कासर-सैरिभाः ॥ |
| 10 A shakal. | ५ स्त्रियां शिवा भूरिमाय-गोमायु-मृगधूर्तकाः । |
| | शृगाल-वञ्चुक-क्रोष्टु-फेरु-फेरव-जम्बुकाः ॥ |
| 5 A cat. | ६ ओतुर् बिडालो मार्जारो वृषदंशक आखुभुक् । |
| 3 An iguana. | त्रयो गौधेर-गौधार-गौधेया गोधिकाऽऽत्मजे ॥ |
| 2 A porcupine.<br>3 His quills. | ७ श्वावित् तु शल्यस्, तल्-लोम्नि शलली शललं शलम् । |
| 2 A swift antelope.<br>3 A wolf. | वातप्रमीर् वातमृगः, कोकस् त्वीहामृगो वृकः ॥ |

इति प्लवंगः,अन्यत्रापिदृश्यते ( वा० $\frac{३।२।४८}{२९।६।५}$ ) इति डे प्लवगः, गमश्च (सू० ) इति खचि प्लवंगमोपि । शाखासंचारी मृगः ( शाखामृगः )। वलयः मुखेस्य वलीमुखः । म्रियते मर्कटः कुम्भकर्णनिगीर्णत्वात् । वने रमते वनरस्तस्यायं वानरः, पक्षे नरो वा । चिकेति जानाति कीशः, कीशब्दमीष्टे वा । वनेओकोऽस्य वनौकाः । कृष्णमुखो गोलाङ्गलः कापेयं चापलादिकम् ॥ ३ ॥ भल्लति (ते) हिनस्ति भल्लुकः, लक्ष्ये तु ( भल्लूकः), दधति कुहरभाजामत्र भल्लूकयूनामिति (उ०राम०२-२१)। ऋक्षति ( ऋक्ष्णोति ) ऋक्षः । अच्छ आभिमुख्येन भल्लति (ते) अच्छभल्लः, अच्छेत्याभिमुख्यार्थेऽव्ययम् । भालयति(ते)भालूकः । भल्लकोपि गण्डति संहन्यते गण्डकः । खडति भिनत्ति खड्गः । खड्गं शृङ्गमस्यास्तीति खड्गी । वार्ध्रीणसोपि । लुलति पङ्के लुलायः । महति मह्यां शेते वा महिषः । महोपि । वाहं हयसमूहं द्वेष्टि वाहद्विषत्, द्विषोऽमित्रे ( $\frac{३।२।१३१}{३२११}$ ) इति शतृप्रत्ययः । वाहद्विषन्नित्येके । धर्मार्तः कं जलमासरति कासरः, ईषत्सरति वा महाकायत्वात् । सीरिभिर्दान्तैर्भाति सीरिभः कुटुम्बी तस्यायं सैरिभः । रजस्वलोपि ॥ ४ ॥ शिनोति शिवा, शकुनावेदिनी वा, शृगालेऽपि स्त्रीलिङ्गः, यच्चाश्वतः—शिवः कोलः शिवा क्रोष्टा भवेदामलकी शिवा । १ । गां मिनोति मीनाति या गोमायुः । मृगान् धूर्वति मृगधूर्तः ॥ असृगालाति सृगालः, सरति सृजति वा । क्रोशति क्रोष्टा । फे—इत्यव्यक्तं रौति फेरुः फेरवश्च । जमति जम्बुकः सर्वभक्षत्वात् । फेरण्डोपि ॥५॥ अवत्याखुभ्य ओतुः । विशन्—आलात्याखून् विडालः, विलालो वा, बिलान्यलति पर्याप्नोति वा, बिलति भिनत्ति—आखून्वा, विड् आलस्याशुचित्वाद्वा, विड आक्रोश इत्यस्माद्वा । आखुभ्यो गृहं मार्ष्टि मार्जारः । वृषानाखून्दशति वृषदंशः । जलेशयादन्या बिलेशया गोधेयम्, अहेर्गोधायां जातो जात्यन्तरमित्येके । ( गौधेर इ० ) गोधाया ढ्रक् ( $\frac{४।१।१२९}{११३५}$ ), आरगुदीचाम् ( $\frac{४।१।१३०}{११३६}$ ), शुभ्रादित्वाड्ढक् ( $\frac{४।१।१२६}{११२३}$ ) ॥ ६ ॥ श्वानं विध्यतीति श्वावित्, नहिवृतिवृषिव्यधीति ( $\frac{६।३।११६}{१०३७}$ ) दीर्घः । शलति शल्यानि

5 A deer or antelope.
८ मृगे कुरङ्ग-वातायु-हरिणाऽजिनयोनयः ।

1 Belonging to a doe.
ऐणेयमेण्याश् चर्माऽऽद्यमेणस्यैणमुभे त्रिषु ॥ 1 Belonging to a buck.

1 Sorts of deer, of which the hides are used.
९ कदली कन्दली चीनश् चमूरु-प्रियकावपि ।
समूरुश् चेति हरिणा अमी अजिनयोनयः ॥

1 Various sorts of deer.
१० कृष्णसार-रुरु-न्यङ्कु-रङ्कु-शम्बर-रौहिषाः ।
गोकर्ण-पृषतैण-र्श्य-रोहिताश् चमरो मृगाः ॥

1 Various animals. A beast in general.
११ गन्धर्वः शरभो रामः सृमरो गवयः शशः ।
इत्याऽऽदयो मृगेन्द्राऽऽद्या गवाऽऽद्याः पशुजातयः ॥

8 A rat.
' अधोगन्ता तु खनको वृकः पुन्ध्वज उन्दुरः ॥ '

2 A mouse, or small rat.
१२ उन्दुरुर् मूषकोऽप्याखुर्, गिरिका बालमूषिका ।
छुछुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका ॥ २ ॥

---

किरति वा शल्यको बिलेशयः । शलको [ लो] पि । तस्य लोम्नि शलाकाख्ये, यन्मलाश्चाविच्छलाकी शलली, शल गतौ । वातं प्रमिमीते ( वातप्रमीः ), वाताभिमुखधावनात् । कोकते गृह्णाति कवते याति वा कोकः । ईहा मृगस्येवास्य ईहामृगः, ईहां मृगयते वा । ईहां वर्कते—ईहा वृक एवैकदेशेन वृक इत्युक्तः । आरण्यः श्वेत्येके । कुक वृक आदाने ॥ ७ ॥ मृग्यते व्याधैर्मृगः । कौ रङ्गति कुरङ्गः । वातमयते वातायुः, वानं शुष्कमयते वानायुरित्येके । ह्रियते गीतेन हरिणः । अजिनस्य योनिः । ( ऐणेयं ) विगारेवयवे का, एण्यावञ् ( ४।३।१५९ / १५३७ ) । ( ऐणं ) विकारादौ, प्राणिरजतादिभ्योऽञ् ( ४।३।१५४ / १५३२ ) । ऐणेयमैणं च वाच्यलिङ्गौ ॥ ८ ॥ के दलति कदली, कन्दे लीयते कन्दली इत्यन्तौ । चिनोतीति चीनः । चमति चमूरुः । प्रीयते प्रियकः । समूर्यं ( र्व्यं ) ते समूरुश्चित्रवर्णः । एतेचर्मण्युपयुक्तः ॥ ९ ॥ अमी मृगविशेषाः । कृष्णेन सारः शबलः कृष्णसारः । रौति रुरुः । न्यञ्चति न्यङ्कुः न्यङ्क्वादित्वात् ( ७।३।५३ / २८६४ ) कुत्वम् । रमते रम्यते वा रङ्कुः । शं वृणोति शंवरः । रोहिषाख्ये तृणे भवो रौहिषः । पृषतो बिन्दुचित्रः, मत्वर्थीयो—अच् । एत्येणः । इषति ऋश्यः, ऋषी गतावित्यस्मान्मूर्धन्यः षः स्यात् । रोहितो रक्तत्वात् । चमति चमरः ॥ ॥ १० ॥ गन्धयत्यर्दयति गन्धर्वः । शृणाति शरभः । रमन्तेस्मिन् रामः । सरति सृमरः । गुवति गवते वा गवयः । शशति प्लुत्या गच्छति शशः । आदिशब्दान्नुरुजा-[ या ]दयः (?) । मृगेन्द्राद्या उक्ताः । गवाद्याश्च वक्ष्यमाणाः पाश्यन्ते पाशैः पशवः, तिर्यञ्चोपि । श्वापदा हिंस्रपशवः ॥ ११ ॥ उनत्त्युन्दुरुः, अदन्तोपि । मूषेति मूषिकः । आखनत्याखुः । पुंध्वजोपि । खनको गुहाशयो गर्ताटश्च । वृषो नानार्थे । गिरति

| | | |
|---|---|---|
| 2 A lizard, chameleon, &c. | १३ सरटः कृकलासः स्यान्, मुसली गृहगोधिका। | 2 A small house-lizard. |
| 4 A spider. | लूता स्त्री तन्तुवायोर्णनाभ-मर्कटकाः समाः ॥ | |
| 2 An insect. 1 A centipede. | १४ नीलङ्गुस् तु कृमिः, कर्णजलौकाः शतपद्युभे। | |
| 2 A caterpillar. 3 A scorpion. | वृश्चिकः शुककीटः स्यादलि-द्रुणौ तु वृश्चिके ॥ | |
| 3 A dove or pigeon. | १५ पारावतः कलरवः कपोतो, ऽथ शशादनः। | |
| 3 A hawk or falcon. | पत्त्री श्येन, उलूकस् तु वायसाराति-पेचकौ ॥ | |
| 8 An owl. | 'दिवान्धः कौशिको घूको दिवाभीतो निशाटनः ॥२॥' | |
| 2 A sky-lark. 2 A wagtail. | १६ व्याघ्राटः स्याद् भरद्वाजः, खञ्जरीटस् तु खञ्जनः। | |
| 2 A heron. 2 A blue jay. | लोहपृष्ठस् तु कङ्कः स्याद,थ चापः किकीदिविः ॥ | |
| 3 The forktailed shrike. | १७ कलिङ्ग-भृङ्ग-धूम्याटा, अथ स्याच्छतपत्रकः। | 2 A wood-pecker. |
| 3 *Pipihā*. | दार्वाघाटो, ऽथ सारङ्गः स्तोककश् चातकः समाः ॥ | |

---

गिरिका, खर्वाखुर्बालमूषिकेति दुर्गः। [ गन्धश्चापि स्त्रियाम् ] ॥१२॥ सरति सरटः। कृकं शिरोग्रीवं लासयति कृकलासः, कृकिलास इत्यपि(प)पाठः। प्रतिसूर्यः शयानकश्च। जाहको गात्रसंकोची हलाहलोऽञ्जलिकेति वाच्यम्। मुस्यति भिनत्ति मुसली, मुस खण्डते, मुशलीति गौडः। गृहगोलिकेति सभ्यः पाठः, यस्या घरगोलीति प्रसिद्धिः। लूयते लूता। तन्त्रं तन्तून्वयति तन्त्रवायः [ तन्तुवायः ]। ऊर्णा नाभावस्योर्णनाभः। मर्कट इव रोहणावरोहणान्मर्कटकः। जालिको जालकारश्च ॥ १३ ॥ नीलति नीला [ ल ]ङ्गुः। क्रामति क्रि[ कृ ]मिः, क्रमितमिशतिस्तम्भामतइच्च (उ० ७२१)। चु(पु)लकोपि। शतं पदानामस्याः शतपदी, कुम्भपदीषुच (५।४।१३९ / ८७८) इति साधुः। उभे द्वे स्त्रियाम्। वृश्चति वृश्चिकः। शूकः कण्टकस्तत्प्रधानः कीटः (शूककीटः), भ्रमरभेदोयम्। आलमनर्थोत्रास्त्याली, ज्यौतिषेऽली। द्रुणाति द्रुणः, द्रुण हिंसायां, कः, द्रोण इत्येके, विषकीटोयम् ॥ १४ ॥ पा(प)रापतस्यायं पारावतः, जपादित्वात् ( ग० ) वत्वम्। रञ्जकश्च। केन पवते कपोतः, कस्य वायोः पोत इत्यागरुः, आरण्योयं, आद्यस्तु गृहकपोतः, अयं त्वभेदं मन्यते। पत्त्रीति सामान्यं विशेषे वर्तते, यच्छाश्वतः—श्येनाख्यो विहगः पत्त्री पत्त्रिणौ शरपक्षिणौ, ( २२३ ) माला—श्येनः पत्त्रिशशादनौ। श्यायते श्येनः। उलति नेत्राभ्यां दहत्युलूकः, ऊर्ध्वालोकनादिति निरुक्तम्। पचति पीयते वा पेचकः। घूको निशाटश्च ॥१५॥ व्याजिघ्रन्नटति व्याघ्राटः। भरद्वाजापत्यं भरद्वाजोस्त्यस्य वा भरद्वाजश्चाटकेराख्यः। खञ्जतीति खञ्जनः। लोहवर्णं पृष्ठमस्य। कङ्कते कङ्कः। चपति चापः। किकीति दीव्यति बाशते किकीदिविः, द्वे नामनी इत्येके, किकिदीविरित्यन्ये ॥१६॥ के लिङ्गं चुडास्य कलिङ्गः। भृङ्गवत्कृष्णपक्षी (भृङ्गः)। धूमवानिवाटति धूम्याटः, धूम्र

4 A gallinaceous fowl. — १८ कृकवाकुस् ताम्रचूडः कुक्कुटश् चरणायुधः ।

2 A sparrow. — १९ चटकः कलविङ्कः स्यात्, तस्य स्त्री चटका, तयोः ।

1 Its female. Their offspring — पुमपत्ये चाटकैरः, स्त्र्यपत्ये चटकैव सा ॥ 1 male and 1 female.

2 Numidian crane. — २० कर्करेटुः करेटुः स्यात्, कृकण-क्रकरौ समौ । 2 *Cáēr.*

4 The black cuckoo. — वनप्रियः परभृतः कोकिलः पिक इत्यपि ॥

13 A crow. — २१ काके तु करटाऽरिष्ट-बलिपुष्ट-सकृत्प्रजाः ।

ध्वाङ्क्षाऽऽत्मघोष-परभृद्-बलिभुग्-वायसा अपि ॥

'स एव च चिरञ्जीवी चैकदृष्टिश् च मौकुलिः ॥'

2 A raven. 2 A gallinule. — २२ द्रोणकाकस् तु काकोलो, दात्यूहः कालकण्ठकः ।

2A kite. 2 A vulture. 2 A parrot. — आतापि- चिल्लौ, दाक्षाय्य-गृध्रौ, कीर-शुकौ समौ ॥

---

आटश्च पदैकदेशत्वात् । शतं बहवः पत्त्राणि पक्षा अस्य शतपत्त्रः। दार्वाहन्ति दार्वाघाटः, दारावाहनोऽणन्त्यस्य । चटःसंज्ञायाम् ( वा० ? )। सरति सारङ्गः, सह—आरङ्गति वा यूथकाचारित्वात् । स्तोकं कायति वाशते याचते वा स्तोककः । चतते( ति ) याचते चातकः । जलरञ्जोपि ॥ १७ ॥ कृकेण शिरोग्रीवेण वक्ति कृकवाकुः । कुगुच्चारणेन कुटति कुक्कुटः । शिखी कालज्ञश्च ॥ १८ ॥ चटति भिनत्ति—आहारं चटकः । कं शिरो लुनाति वलयति कलविङ्कः । ( चटका ) आजाद्यतष्टाप् ( ४।१।४/४।५।४ ), क्षिपकादित्वाभावः ( क्षिपकादीनां च ) । ( तयोः ) चटकस्य चटकायाश्चापत्यं पुमान्—चाटकैरः, चटकाया एरक् ( ४।१।१२८/११३४ ), चटकाच्चेत्युपसंख्यानं ( चटस्येति वाच्यम् ) । स्त्री च तदपत्यं च तत्र, स्त्रियामपत्ये लुग्वक्तव्यः (वा० २६२५/११२४), लुक्तद्धितलुकि ( १।२।४९/१४०८ ) इति टापो लुक्यपि स्त्रीत्वात्पुनष्टाप् ॥ १९ ॥ कर्केति रेटते । केति च रेटते वाशते ( करेटुः ) । कृ इति कणति कृकं नयति वा कृकणः । क्रेति करोति वाशते क्रकरः । परभृतः काकीपुष्टत्वात् । कोकते चित्तं गृह्णाति कोकिलः । अपिकायति पिकः । कलकण्ठस्ताम्राक्षश्च ॥ २० ॥ काशब्दं कायति ककते वा लौल्यात्काकः । केति रटति करटः । नास्ति रिष्टं हिंसास्यामृतभुकस्त्वादरिष्टः । बलिभिः पुष्टो वैश्वदेवभागार्हत्वाद् बलिपुष्टः । सकृत्प्रजायते सकृत्प्रजाः, एकाण्डप्रसवात् । ध्वाङ्क्षति ध्वाङ्क्षः । आत्मनः स्वनाम्नो घोषोऽस्यात्मघोषः, काकेति वाशनात् । परान् पिकान् बिभर्ति परभृत् । वय एव वायसः, प्रज्ञादित्वादण् ( ५।४।३८/२१०६ ), वयते वा । एकदृष्टिश्चिरजीवी मौकुलिर्द्विकश्च ॥ २१ ॥ (द्रोणकाकः) वृद्धकाकोद्रिकाको वा, यदाहुः—द्रोणकाको दग्धकाको वृद्धकाको वनाश्रयः, ( रा. नि. ६।४८६ ) द्रुण हिंसायां, द्रोणोपि । द्वितीयं तृतीयं वा रूपं वहति द्वित्य-

2 A curlew.
2 A crane. 2 The Indian crane.
4 The ruddy goose.

२३ क्रुङ्क्रौञ्चो,ऽथ बकः कह्वः, पुष्कराऽऽह्वस् तु सारसः।
कोकश् चक्रश् चक्रवाको रथाङ्गाऽऽह्वय-नामकः॥

2 A drake.
2 An osprey.
4 Geese.

२४ कादम्बः कलहंसः स्यादुत्क्रोश-कुररौ समौ।
हंसास् तु श्वेतगरुतश् चक्राङ्गा मानसौकसः॥

1 Varieties of geese.
3 *Sarali*.

२५ राजहंसास् तु ते चञ्चु-चरणैर् लोहितैः सिताः।
मलिनैर् मल्लिकाक्षास् ते, धार्तराष्ट्राः सितेतरैः॥

2 A small crane.
Female duck or goose.
1 A female Indian crane.

२६ शरारिराटिराडिश् च, बलाका बिसकण्ठिका।
हंसस्य योषिद् वरटा, सारसस्य तु लक्ष्मणा॥

2 A bat.
2 A cock-roach.
2 A blue fly.
2 Bee.

२७ जतुका ऽजिनपत्रा स्यात्, परोष्णी तैलपायिका।
वर्वणा मक्षिका नीला, सरघा मधुमक्षिका॥

---

वाट्, तस्यापत्यं दात्यूहः, देविकाशिंशपेत्यात्वम् (७।३।१ / १४३९)। कालः कण्ठोऽस्य कालाः कण्टका रोमोद्भेदा वास्य कालकण्ठः कालकण्टकः। जलरङ्को(ङ्को)पि। सिंहावलोकितेन समावित्येव। आतपत्यातापी। चिल्लति चिल्लः, चिल्ल शैथिल्ये। दक्षते दक्षाय्यः, श्रुदक्षिस्पृहिगृहिभ्य आय्यः (उ० ३७६), ततोऽपत्येऽण् (तस्येदम्)। गृध्यति मांसं गृध्रः। कीशब्दमीरयति कीरः। शुको नीलत्वात्, शवतीत्येके। प्रियदर्शनोऽपि॥ २२॥ कुञ्चति क्रुङ्। (क्रौञ्चः) प्रज्ञादित्वादण् (५।४।३८ / २१०३), स्त्रियामजादित्वात्क्रौञ्चा। वक्ति वकः, न्यङ्क्वादिः (७।३।५३ / २८६४)। वकोटोऽपि। केन के जले वा ह्वयते कह्वः। सरति भवः सारसो लक्ष्मणाख्यः। विलीनाङ्गो दीर्घजङ्घश्च। कोकते वाशते कोकः। चकते चक्रः। चक्रेति वाक्-आख्यास्य चक्रवाकः। रथाङ्गं चक्रमाह्वयो नाम चास्य रथाङ्गाह्वयो रथाङ्गनामा च॥ २३॥ कदम्बस्यायं संघचारित्वात्कादम्बः। कलो मधुरवाग्हंसः (कलहंसः)। उच्चैः क्रोशत्युत्क्रोशः। कुरति कुररः, कुर शब्दे, कुरेति शब्दं राति वा। हन्ति गच्छति हंसः। श्वेता गरुतः पक्षा अस्य श्वेतगरुत्। चक्राकाराङ्गो वृत्तत्वात्, चक्राङ्क इत्येके। मानसाख्ये देवसरस्योकोऽस्य मानसौकाः॥ २४॥ चञ्चुसहितैश्चरणैरिति लक्षणे तृतीया। मलिनैश्चञ्चुचरणैस्ते सिता मल्लिकाक्षाः, [मल्लिकाकाराक्षाः] शुक्लापाङ्गत्वात्। कृष्णैश्चञ्चुचरणैर्धृतराष्ट्रे-अमात्ये भवा धार्तराष्ट्राः, राजहंसेभ्यो न्यूनत्वात्॥ ॥ २५॥ शृणन्त्येनां शरारिः। अतत्यातिः। अटत्याटिः। एताः स्त्रियाम्, बलाहकान् कायति बलेनाकति याति वा बलाका। बिसमिव कण्ठोऽस्याः, बिसकण्टिकेत्येके। शारिका गोराटी पीतपादेति च वाच्यम्। व्रियते वरटा, स्त्रीविषयत्वाज्जातेर्ङीष् नास्ति, वरलापि। योषिदित्येव, लक्ष्मणीत्येके, अत एव लक्ष्मणाख्योऽसौ॥ २६॥ जतिवव कृष्णपिङ्गलत्वाज्जतुका। अजिनं पत्त्राणि पक्षा अस्या अजिनपत्त्रा चर्मवटकत्वात्।

2 A small bee. 2 A gadfly.
२८ पतङ्गिका पुत्तिका स्याद्, दंशस् तु वनमक्षिका ।

2 A smaller sort of gadfly. 2 A wasp.
दंशी तज्-जातिरल्पा स्याद्, गन्धोली वरटा द्वयोः ॥

4 A cricket.
२९ भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः ।

2 A grass-hopper. 2 A firefly.
समौ पतङ्गशलभौ, खद्योतो ज्योतिरिङ्गणः ॥

11 A large black bee.
३० मधुव्रतो मधुकरो मधुलिण्-मधुपाऽलिनः ।
द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमराऽलयः ॥

9 A peacock.
३१ मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥

1 His cry. 1 The eye of his tail.
३२ केका वाणी मयूरस्य, समौ चन्द्रक-मेचकौ ।

2 His crest. 3 His tail.
शिखा चूडा, शिखण्डस् तु पिच्छ-बर्हे न-पुंसके ॥

---

परमुष्णत्वमस्याः शीतापहतत्वात्, परं विरुद्धं वा तेजसोऽन्धकारात् ( परोष्णी )। तैलं पिबतीति तैलपायिका, नित्यमास्यविकासात्। चतुःसंज्ञे( ज्ञी )त्येके, तैलाटथा-अजिनपक्षत्वात्। मुखविष्ठा वल्गुलिका निशाटनी च। वृणोति वर्वणा। मक्षन्ति रुष्यन्त्यस्यै मक्षिका। सरन्तो घातयति सरघा ॥ २७ ॥ पतति-अपतङ्गति वा पतङ्गिका। पुत्कुत्सितं तनोति पुत्तिका, मधुमक्षिकाभेदोयं, यद्भिमिः-माक्षिकं तैलवर्णं स्याद् घृतवर्णं तु पौतिकम्। भ्रामरं तु भवेच्छुक्लं क्षौद्रं तु कपिलं भवेत् ॥ दशति दंशः। ( दंशी ) दंशजातीया, जातेरिति ( $\frac{६।३।४१}{८४२}$ ) ङीष्। गन्धयतेऽर्दयति गन्धोली, गन्धालीत्येके। वृणोति वरटा तैलाटाख्या ॥ २८ ॥ आकृत्या भृङ्गमियर्ति भृङ्गारी। चीति रौति चीरुका। चीति रिणाति चीरी। झिल्ली वाद्यभेदस्तत्तुल्यशब्दा झिल्लिका चक्राख्या, केऽणः ( $\frac{७।४।१३}{८२४}$ ) इति ह्रस्वः, झिल्लिकार्ति ( झां )कृतीनामिति तु लक्ष्यम्। शलति शर्म लभते वाग्नौ शलभः। खे द्योतते खद्योतः। ज्योतिषेङ्गति चलति ज्योतिरिङ्गणः। इन्द्रगोपको ज्योतिर्माली कीटमाणिक्यं च [ -मणिश्च ] ॥ २९ ॥ मधु मधु व्रतयति भुङ्क्ते मधुव्रतः। अलत्यली, अलिश्च। द्वौ रेफौ नाम्न्यस्य द्विरेफः। भृजति बिभर्ति वा भृङ्गः। षट् पदानि चरणा अस्य षट्पदः। भ्रमति भ्रमरः। चञ्चरीकभसले(ने)न्दिन्दिररोलम्बा देश्याम् ॥ ३० ॥ मीनात्यहीन् मयूरः। बर्हमस्यास्ति ( बर्हिणः ), फलबर्हाभ्यामिनन् (वा० $\frac{३२१५}{३४९८}$)। शिखास्त्यस्य शिखावलः, दन्तशिखात्संज्ञायां ($\frac{५।२।११३}{१९२०}$) वलच्। शिखी, व्रीह्यादित्वात् ($\frac{५।२।११६}{१९२३}$)। मेघनादमनुलसति नृत्यति-अवश्यं मेघनादानुलासी। चन्द्रको शुक्लापाङ्गश्च ॥३१॥ के मूर्ध्नि कायति केका। चन्द्रप्रतिकृतिश्चन्द्रकः। मेचको मिश्रवर्णत्वात्, यत्कात्यः-बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधः। मयूरस्येत्येव, अन्यत्रोपचारात्। शिखाभिर्डयते शिखण्डः। पिच्छति पिच्छम्। बर्हति नृत्येनोर्ध्वीभवति बर्हम्। प्रचलाकोपि। कलापो

27 A bird in general.

३३ खगो विहङ्ग-विहग-विहङ्गम-विहायसः ।
शकुन्ति-पक्षि-शकुनि-शकुन्त-शकुन-द्विजाः ॥

३४ पतत्रि-पत्रि-पतग-पतत्-पत्ररथाऽण्डजाः ।
नगौको-वाजि-विकिर-वि-विष्किर-पतत्त्रयः ॥

३५ नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।

13 Various birds.

तेषां विशेषा—हारीतो मद्गुः कारण्डवः प्लवः ॥

३६ तित्तिरिः कुक्कुभो लावो जीवञ्जीवश् च कोरकः ।
कोयष्टिकष् टिट्टिभको वर्तको वर्तिकाऽऽदयः ॥

6 A wing. 2 Its root. 2 The beak.

३७ गरुत्-पक्षच्छदाः पत्त्रं पतत्रं च तनूरुहम् ।
स्त्री पक्षतिः पक्षमूलं, चञ्चुस् त्रोटिरुभे स्त्रियौ ॥

---

नानार्थे ॥३२॥ खे गच्छति खगः, अन्यत्रापि दृश्यते (वा० २०१६/२९५६) इति डः। विहायसा गच्छति, गमेःसुपि वाच्यः(२००९/२९५३)खच् वक्तव्यः, विहायसो विह इति (वा० २०१०/२९५३) डे, खच्चडिद्वा (२०११/२९५३)। विजिहीते विहायाः, यच्छाश्वतः–विदुर्विहायसं व्योम पक्षिणश्च विहायसः(३६५)। शक्नोतीति,शकेरुनोन्तोन्त्युनयः(उ०३२९)। पक्षाः सन्त्यस्य पक्षी। द्विर्जायत इति द्विजः॥३३॥ पतत्त्राणि विद्यन्ते येषु ते पतत्त्रिणः। पतन्त्यनेनेति पतः पक्षः, पुंसि संज्ञायां घः (३।३।११८/३२९६), पतैर्गच्छति पतगः। पतति पतन्। पत्त्राणि पक्षा रथोऽस्य पत्त्ररथः। नगे ओकोऽस्य नगौकाः। वाजो वेगोऽस्यास्तीति वाजी। विकिरति भक्ष्यं विकिरः–विष्किरः, विष्किरःशकुनिर्विकिरो वा (६।१।१५०/१०६७०)। वाति वयति वा विः, वेञोडित् ( उ० ५१२ ) पतत्त्राणि सन्त्यस्य पतति वा पतत्त्री, पतेरत्रिन् ( उ० ५०९ ), पतेरत्रिरिति भ्रान्त्या पतत्रि ग्रन्थकृदिदन्तं मन्यते ॥ ३४ ॥ पतितुमिच्छन् पित्सन् ,सनिमिमेति ( ७।४।५४/२६२३ ) इस्–इडभ्यासलोपौ । नभसा गच्छति नभसंगमः, गमेःसुप्युपसंख्यानात्खच् (वा० २००९/२९५३) वाचंयमपुरंदरौ च (६।३।६९/२९५७) इति चकारादमागमः, अत्यविचमितमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसजिति ( उ० ३९७ ) नभः( भस) शब्दोऽस्तीत्येके। पतङ्गो नानार्थे। एते पत्त्रिविशेषाः। हरिणं वर्णमितो हारितः। मज्जति मद्गुर्जलकाकः,न्यङ्कादीनां च (७।३।५३/२८६४) करण्डे भवं कारण्डं पञ्जरबन्धं वाति कारण्डवः। प्लवते प्लवः ॥ ३५ ॥ तित्तिशब्दं राति तित्तिरिः। कुकुशब्दं करोति ( भाषते ) कुकुभः। लाति [लावयति] लूयते वा लावः। जीवेन सहचरेण जीवति जीवंजीवः, बाहुलकात्खच्। चकते ( ति ) ज्योत्स्नया तृप्यति चकोरः। ओको यजति कोयष्टिः शिखरी। टिट्टिशब्दं भाषते टिट्टिभः। कुकति [कोकते] कोकः। क्रेति करोति क्रकरः। वर्तत इति ( वर्तकः ),। वर्तका शकुनौ प्राचां (वा० ४५३३/४६६४) इति साधुः, पक्षे वर्तिका। आदिशब्दात्कपिञ्जलादयः ॥ ३६ ॥ गिरति खं गरुत्। (पक्षः) पक्ष परिग्रहे। छाद्यतेऽनेनाङ्गं छदः, छादेर्घे

3 Acts of flying. ३८ प्रडीनोड्डीन-संडीनान्येताः खग--गति-क्रियाः ।

3 An egg. 2 A nest. पेशी कोशो द्वि-हीनेऽण्डं, कुलायो नीडम-स्त्रियाम् ॥

7 Young of any animal. ३९ पोतःपाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

3 A couple, male and female. स्त्रीपुंसौ मिथुनं द्वन्द्वं, युग्मं तु युगुलं युगम् ॥ 2 A pair or brace.

22 A flock or multitude. ४० समूहे निवह-व्यूह-संदोह-विसर-व्रजाः ।

स्तोमौघ-निकर-व्रात-वार-संघात-संचयाः ॥

४१ समुदायः समुदयः समवायश् चयो गणः ।

स्त्रियां तु संहतिर् वृन्दं निकुरम्बं कदम्बकम् ॥

1 A multitude of similar things. ४२ वृन्द-भेदाः—समैर् वर्गः, संघ-सार्थौ तु जन्तुभिः । 1 Of animals.

1 Of homogeneous animals. सजातीयैःकुलं, यूथं तिरश्चां पुन्-नपुंसकम् ॥ 1 Of birds and beasts.

---

(६।४।९६/३२९७) इति ह्रस्वः पतत्यनेन पत्त्रम् । पतन्तं त्रायते पतत्त्रम् । मूले, पक्षात्तिः (५।२।२५/१८२६) । चञ्चति चलति चञ्चुः । त्रोटयति त्रोटिः । तुण्डं च ॥३७॥ प्रकृष्टमूर्ध्वं संहतं वा डयनं, स्वादय ओदितः (ग०सू०१९६), (ओदितश्च८।२।४५/३०१९) इति निष्ठानत्वम् । एता इति हि डीनाद्युपलक्षणार्थं । पेशीनां मांसखण्डानां कोशः । कुश्यति कोशः । अमति निःसरत्यस्मादण्डम् । तिस्रः संज्ञा इति गौडाः । कौ लीयते कुल्यते कुलमेति वा कुलायः । निलीयतेऽस्मिन् नीडः ॥ ३८ ॥ पुनाति पोतः । पान्त्येनं पिबति स्तनौ वा पाकः । ऋभ्यते(अर्यते) वृद्धिं प्राप्यतेऽर्भकः । डयति ( ते) डिम्भः । प्रथते वर्धते पृथु कायति वा पृथुकः । श्यति शवति वा शावकः । शिनोति स्नेहेन शेते । वात्यथ शिशुः । स्त्री च पुमांश्च स्त्रीपुंसौ, अचतुरविचतुरेति(५।४।७७/९४८) साधुः । मेथते संगच्छते मिथुनम् । मिथृमेथृ संगमने । द्वन्द्वमिति, द्वन्द्वं रहस्यमर्यादेति (८।१।१५/२१५०) साधुः, यत्कालिदासः—द्वन्द्वानि भावं क्रियया विवव्रुः ( कु. सं. ३।३५ ) युज्यते धर्मिवृत्त्या युगम् । धर्मवृत्तौ तु युगं लाति युगलं, मत्वर्थीयो वा लच् (सिध्मादिभ्यश्च ५।२।९७/१९०४) ॥३९॥ समूह्यते.ढौक्यते समूहः । निवहति निवहः । व्यूहते व्यूहः । संदुह्यते प्रपूर्यते संदोहः विस्त्रियते विसरः । व्रज्यते व्रजः, गोचरसंचरवहव्रजेति (३।३।११९/३२६८) साधुः । स्तूयते स्तोमः । ओह्यते–ओघः, न्यङ्क्वादिः (७।३।५३/२८६४)। निकीर्यते निकरः। व्रियते वारः। संहन्यते संघातः,हो हन्तेरिति(सू०७।३।५४/३५८) घः । संचीयते संचयः ॥४०॥ समुदयनं समुदायः, अयतेर्घञ् । समुदयः, इणोऽच् । समवेयते समवायः । चीयते चयः । गण्यते गणः । वृणोति वृन्दम् । निकुरति निकुरम्बम् । कदम्बप्रतिकृतिः केसरसंचयात्मकत्वात्(कदम्बकम्), कुत्सितमम्बते वा ॥४१॥ समूहविशेषा वक्ष्यन्त इति शेषः । सजातीयैः प्राणिभिरप्राणिभिश्च समूहो वर्गः,

1 Of other beings (men, etc.)
1 Of persons practising like duties.

४३ पशूनां समजो, ऽन्येषां समाजो, ऽथ सधर्मिणाम् ।
स्यान् निकायः, पुञ्ज-राशी तूत्करः कूटमस्त्रियाम् ॥

4 A heap of grain, etc.

Flocks of various animals.
2 Domesticated (a bird or beast).

४४ कापोत-शौक-मायूर-तैत्तिराऽऽदीनि तद्-गणे ।
गृहाऽऽसक्ताः पक्षि-मृगाश् छेकास् ते गृह्यकाश् च ते ॥

इति सिंहादि-वर्गः ५, अत्र मूलश्लोकाः ४३, क्षे० २॥

---

## अथ नृवर्गः ६

6 Man : mankind.
१ मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।

5 Man ; or male.
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥

11 A woman ; or female.
२ स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥

---

वृज्यते विजातीयेभ्य इति । प्राणिभिः समूहः (संघः), संहन्यते संघः, संघोद्घौगणप्रशंसयोः ( ३।३।८६ / ३२६४ ) इति साधुः, यथा गोसंघः, मेघसंघाद्युपचारात् । सरति सार्थोऽध्वगवृन्दम् । जन्तुभिरित्येव, कुलं संस्त्याने बन्धुषु च, (यथा) विप्रकुलम् । वृन्दमित्येव, यथा मृगयूथः, यु मिश्रणे ॥ ४२ ॥ संवीयते समजः, समुदोरजःपशुष्विति ( ३।३।६९ / ३२४६ ) अप् । पशुभ्योऽन्येषां वृन्दं (समाजः), यथा श्रोत्रियसमाजः । (सधर्मिणां) समूह इत्येव, यथा श्रमणनिकायः, निचीयते निकायः, निवासचितिशरीरेष्विति ( ३।३।४१ / ३२२३ ) घञ् कत्वं च । धान्यादेरुच्छ्रितं वृन्दं, पुञ्ज्यते पुञ्जः पूर्यते वा । रश्यते राशिः, रशिः सौत्रो दीप्त्यर्थः । उत्कीर्यत उत्किरः । कुट्यते कूटः ॥ ४३ ॥ कपोतादिसमूह एतानि वर्तन्ते, अनुदात्तादेरञ् ( ४।२।४४ / १२५३ ) । आदिशब्दात्काकादि । छायन्ते छेकाः पञ्जरादौ स्थाप्यन्ते । गृह्यन्ते गृह्यकाः, पदास्वैरीति ( ३।१।११९ / २८७० ) क्यप्, स्वार्थे कन् ॥४४॥ इति सिंहादिवर्गः ।५।

---

मनोरपत्यं मनुष्यो मानुषश्च, मनोर्जातावञ्यतौ षुक् च( ४।१।१६१ / ११८५ ) । म्रियते मर्त्यः, स्वार्थे यत् । मानवः, तस्येदमर्थेऽण्, ( ४।३।१२० / १५०० ) अपत्यार्थे अञ्यद्भ्यां बाधितत्वात् । नृणाति नरः, नॄ नये । पाति पुमान् । पञ्चभिर्भूतैर्जातः पञ्चजनः । पुरि पुरि शयनात्पूरणाद्वा पुरुषः । (पूरुषः) अन्येषामपीति ( ६।३।१३७ / ३५३९ ) वा दीर्घः । नयति ना, नयतेर्डिच्च (उ० २५७) इति ऋः ॥ १ ॥ स्त्यायतेऽस्यां गर्भः । स्त्री स्त्यायेते शुक्रशोणिते अस्यां इति वा । यौति पुंसा [ योषति ] योषित्, हृसृरुहियुषिभ्य इतिः (उ० ९७) । युष्य (योष) त्यन्यं यौति

12 Various descriptions of women.
2 A passionate woman.

३ विशेषास् त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥

4 An excellent woman.

४ सुन्दरी रमणी रामा, कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥

1 A queen.
1 Other wives of a king.
6 A wife or wedded woman.

५ कृताऽभिषेका महिषी, भोगिन्यो ऽन्या नृप-स्त्रियः ।
पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥

2 A matron.
4 A virtuous faithful wife.

६ भार्या जायाऽथ पुम्-भूम्नि दाराः, स्यात् तु कुटुम्बिनी ।
पुरन्ध्री, सुचरित्रा तु सती साध्वी पतिव्रता ॥

---

वा योषा । नारीति, नृनरयोर्वृद्धिश्च ( ग० सू० ५४ ) इति शार्ङ्गरवादिपाठान्ङीन् । सीमन्तः केशवेशोऽस्त्यस्याः सीमन्तिनी । उह्यतेऽसौ भर्त्रा, बध्यतेऽनया भर्ता वा वधूः। प्रतीपं वक्रं पश्यति, अपाङ्गनिरीक्षणात् । वामा विपरीतलक्षणया शृङ्गारवेदनाद्वा । वनति भजति वनिता । मह्यते महिला । तथाशब्दान्महेलापि, यल्लक्ष्यम्--अजयद् द्विषतः प्रासनयः परमहेलया । स्वप्नेऽपि मनसि स्पृष्टो न यः परमहेलया ? ॥ २ ॥ प्रशस्तान्यङ्गान्यस्या अङ्गना, अङ्गात्कल्याणे (ग०सू०११८) इति पामादित्वान्नः (लोमादिपामादीति ५।२।१००/१९०७) । बिभेति तच्छीला भीरुः, भियःक्रुक्लुकनौ (३।२।१७४/३१५४) । कामयते कामिनी। वामे बाधके लोचने अस्या वामलोचना । प्रकृष्टो मदःकामवेगोऽस्याः प्रमदा । मानः प्रणयकोपोऽस्या मानिनी । काम्यते कान्ता । लडति ला(ल)ल्यते वा ललना, लड विलासे, लल ईप्सायां वा । नितम्बिनी गुरुनितम्बा ॥ ३ ॥ विशेषा इत्येव । सुष्ठु—आद्रियते सुन्दरी । रमन्तेऽस्यां रमणी । रमते रामा, ज्वलितिकसन्तेभ्यो णः ( ३।१।१४०/२९०२ )। कुप्यति तच्छीला कोपना, क्रुधमण्डार्थेभ्यश्च ( ३।२।१५१/३१३१ ) इति युच् । भामिनी, भाम क्रोधे । उत्तमा स्त्रीपर्याया । आरुह्यतेऽस्मिन्नारोहो नितम्बः, स वरोऽस्या वरारोहा । मत्ता क्षीवेव काशते भाति मत्तकाशिनी, कर्तर्युपमाने (३।२।७९/२९८९) णिनिः । वरो वर्णोऽस्या वरवर्णिनी ॥ ४ ॥ नृपस्त्रीत्येव । श्रीमहादेवीत्वे कृताभिषेका, यथा वासवदत्ता, मह्यते पूज्यते महिषी । पद्मावत्याद्याः, भोगोऽस्त्यासां भोगिन्यः । पत्युर्नो यज्ञसंयोगे (४।१।३३/४९७) इति पत्नी । पाणिगृहीतोऽस्याः, बहुव्रीहेश्चान्तोदात्तात् (४।१।५२/५०८) इत्यत्र पाणिगृहीतीत्यादिना ( वा० ५०९/२४७९ ) विशेष इति ङीप् । द्वितीया धर्मसहाया । सह धर्मोऽस्त्यस्याः सहधर्मिणी, यज्ञादौ सहाधिकारात् ॥ ५ ॥ भरणीया भार्या, संज्ञायां भृञः—ऋहलोर्ण्यत् (३।१।१२४/२८७२) । जायतेऽस्यां पतिर्जाया, यन्मनुः—जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ( म. ९–८ ) । दारयन्ति दाराः, दारजारौ कर्तरि णिलुक्च (वा० ३१९०/२१८२) । अथशब्दात्पुंभूम्नोर्न पूर्वभावत्वम् । सहचरी च ।

3 A superseded wife. 3 A bride choosing her husband. 2 A chaste woman.

७ कृतसापत्निका ऽध्यूढा ऽधिविन्ना, ऽथ स्वयंवरा
पतिंवरा च वर्या, ऽथ कुलस्त्री कुलपालिका ॥

2 A maiden. 3 A girl. 2 One arrived at puberty. 2 A young woman.

८ कन्या कुमारी, गौरी तु नग्निका ऽनागतार्तवा ।
स्यान् मध्यमा दृष्टरजास्, तरुणी युवतिः समे ॥

3 A daughter-in-law. 2 A woman staying in her father's house. 2 A woman desirous of any thing. 2 One amorous or lustful.

९ समाः स्नुषा-जनी-वध्वश्, चिरिण्टी तु सुवासिनी ।
इच्छावती कामुका स्याद्, वृषस्यन्ती तु कामुकी ॥

1 One who goes to an assignation. 8 A disloyal or unchaste woman.

१० कान्ताऽर्थिनी तु या याति संकेतं सा ऽभिसारिका ।
पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ॥

---

कुटुम्बं पुत्रभृत्याद्यस्त्यस्याः कुटुम्बिनी । पुरं धत्ते पुरंध्री । पतिसेवैव व्रतं यस्याः सा पतिव्रता, यत्स्मृतिः–नास्ति स्त्रीणां पृथग्यज्ञो न व्रतमिति (म.५।१५५) ॥६॥ कृतं सापत्नकं सपत्नीभावोऽस्याः ( कृतसापत्नका )। अध्युपर्यूह्यते द्वितीया (अन्या) स्या अध्यूढा । अधिविन्दत्यस्यामधिविन्ना । स्वयं वृणीते स्वयंवरा, संज्ञायां भृतृवृजीति (३।२।४६/२९६३) खच् । पतिं वृणीते पतिंवरा, खच् । व्रियतेऽनया वर्या, अवद्यपण्येति (३।१।१०१/२८४९) साधुः, वरमर्हति वा । कुलस्य संपादयित्री स्त्री (कुलस्त्री) ॥७॥ कनति कन्या, कनी दीप्तौ, अघ्न्यादिः ( उ० ५५१ ), कन्यायाःकनीनच ( ४।१।११६/१११९ ) इति लिङ्गाद् ङीप्–नास्ति । कुमारयति क्रीडति कुमारी कुत्सितो मारोऽस्या वा, अनूढत्वात् । अष्टवर्षा भवेद् गौरी दशमे नग्निका भवेदिति (?) स्मार्तो विशेषो नाद्रितः । गो(गु) रते गौरी । नजते नग्ना, ओणजी ओलजी व्रीडे । ऋतौ भवमार्तवं रजः । ( मध्यमा ) अजाद्यतष्टाप् ( ४।१।४/४५४ )। ( तरुणी ) वयसि प्रथमे ( ४।१।२०/४७८ ) इति ङीप् स्यात्, नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानात् ( वा. २४२५/४७७ ) वा ङीप् । ( युवतिः ) यूनस्तिः ( ४।१।७७/५३२ ) ॥ ८ ॥ स्नौति स्नुषा । जायतेऽस्यां जनी । वधूटी च ग्रामटिकावत् । चिरिणोति चिरिण्टी, चरति चरण्टीत्येके, वयस्यचरमे ( २४३५/४७८ ) इति ङीप् । सुष्ठु वसति सुवासिनी, स्ववासिनीति द्रविडाः । (कामुका) लषपतपदेत्युकञ् ( ३।२।१५४/३१३४ )। वृषमिच्छति, सुप आत्मनःक्यच् (३।१।८/२६५७), अश्वक्षीरवृषलवणाना-मात्मप्रीतौ क्यचि ( ७।१।५१/२६६२ ) इत्यात्राश्ववृषयोर्मैथुनेच्छायामिति ( वा० ४३०१/२६६२ ) असुक् । जानपदकुण्डेति ( ४।१।४२/५०७ ) मैथुनेच्छायां ङीपि कामुकी ॥ ९ ॥ यद्भरतः–

हित्वा लज्जाभये श्लिष्टा मदनेन मदेन च । अभिसारयते कान्तं सा भवेदभिसारिका ( ना. शा. २४।१२ )॥ ण्वुलन्तोऽयं (अभिसारिका)। वासकसज्जा विरहोत्कण्ठिता खण्डिता विप्रलब्धा कलहान्तरिता तथा प्रोषितभर्तृका स्वाधीनदयितेत्यन्या सप्तान्व-र्थत्वान्न दर्शिताः ( ना. शा. २४।२१६, २१७ )। पुमांसं चलयति पुंश्चली । कर्षति

११ स्वैरिणी पांशुला च, स्यादशिश्वी शिशुना विना ।
अवीरा निष्पतिसुता, विश्वस्ता-विधवे समे ॥

1 A childless woman.
1 One who has neither husband nor son.
2 A widow.

१२ आलिः सखी वयस्या, ऽथ पतिवत्नी सभर्तृका ।
वृद्धा पलिक्नी, प्राज्ञी तु प्रज्ञा, प्राज्ञा तु धीमती ॥

3 A woman's female friend.
2 A woman whose husband is living.
2 Old or greyhaired.
2 Intelligent. 2 Wise.

१३ शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्-जातिरेव च ।
आभीरी तु महाशूद्री जाति-पुं-योगयोः समा ॥

1 The wife of the Sudra.
1 A woman of the *Sūdrā* tribe.
2 A milk-woman.

१४ अर्याणी स्वयमर्या स्यात्, क्षत्रिया क्षत्रियाण्यपि ।
उपाध्यायाऽप्युपाध्यायी, स्यादाचार्याऽपि च स्वतः ॥

2 A woman of the *Vaisya* tribe.
2 One of the *Kshatriya* tribe.
2 A female teacher.
1 A spiritual instructress.

---

चेतश्चर्षणी, कृषेरादेश्च चः ( उ० २६१ )। बध्नाति बन्धकी । कुलान्यटति कुलटा शकन्ध्वादिः ( वा० ३६३२/७९ ), कुत्सितं लटतीत्येके । एति तच्छीला—इत्वरी चपला, इण्नशूजिसर्तिभ्यः क्वरप् ( ३।२।१६३/३१४३ ) ॥ १० ॥ स्वेनेर्ते तच्छीला स्वैरिणी, स्वादीरेरिणोः ( वा० ३६०६/७३ ) इति वृद्धिः । पांशुर्मालिन्यहेतुरस्त्यस्याः पांशुला । ( अशिश्वी ), सख्यशिश्वीति भाषायां ( ४।१।६२/५१७ ) इति साधुः । न विद्येते वीरौ पतिपुत्रावस्या अवीरा । विश्वसिति स्म विश्वस्ता । विगतो धवो भर्ताऽस्या विधवा ॥ ११ ॥ अल( आलय )त्यालिः, यच्छाश्वतः—आलिः सखी सेतुरालिरालिरावलिरिष्यते ( ४२३ )। समानं ख्याति सखी । वयसा तुल्या वयस्या, नौवयोधर्मेति ( ४।४।९१/१६४३ ) यत् । सध्रीची च । ( पतिवत्नी ) अन्तर्वत्पतिवतोर्नुक् ( ४।१।३२/४८९ ), ङीप् च । ( पलिक्नी ) असितपलितयोर्न ( वा० २४५३/४९६ ), छन्दसि क्नमेके ( वा० २४५४/४९२ ), भाषायामपीष्यत इति ङीप् च । प्रजानातीति प्रज्ञा, इगुपधेति कः ( ३।१।१३५/२८९७ )। ( प्राज्ञी ) प्रज्ञादिभ्यश्चेति ( ५।४।१३८/१६६ ) स्वार्थेऽण् । प्रज्ञास्त्यस्याः ( प्राज्ञा ), प्रज्ञाश्रद्धार्चावृत्तिभ्योऽणः ( ५।२।१०१/१९०८ ) ॥ १२ ॥ ( शूद्री ) पुंयोगादाख्यायां ( ४।१।४८/५०४ ) इति ङीष् । शूद्रजातीया स्त्री शूद्रा, शूद्राचामहत्पूर्वाजातिः ( वा० ४६४/२४०० ) इति—अजादित्वाट्टाप् । आभीरजातीया महाशूद्रस्य स्त्री च, जातिलक्षणे पुंयोगे च ङीप् । वैश्यभेद एवाभीरो गवाद्युपजीवी । अन्यत्र महती चासौ शूद्रा च महाशूद्रा ॥ १३ ॥ स्वयं पुंयोगं विना । अर्यक्षत्रियाभ्यां वा स्वार्थे ( वा० २४७८/५०५ ) इति ङीषानुकौ, पक्षे टाप्, योपधत्वाज्जातिलक्षणो ङीप्-नास्ति । स्वयमित्येव । उपेत्याधीयतेऽस्याः, अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् (वा. ११८४/२१९१) इति घञ् वा च ङीष् । स्वयं मन्त्रव्याख्याकृदाचार्या । स्वता जाता-

1 The wife of a spiritual preceptor.
१५ आचार्यानी तु पुं-योगे, स्यादर्यी, क्षत्त्रियी तथा ।
1 Wife of a *Vaisya*. 1 Wife of a *Kshatriya*.

2 Wife of a tutor. 1 A masculine woman.
उपाध्यायान्युपाध्यायी, पोटा स्त्री-पुंस-लक्षणा ॥

2 Hero's wife. 2 A hero's mother.
१६ वीरपत्नी वीरभार्या, वीरमाता तु वीरसूः ।

4 A woman who has borne a child.
जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥

1 A naked woman.
१७ स्त्री नग्निका कोटवी स्याद्, दूती-संचारिके समे ।
2 A female messenger or go-between.

1 A middle-aged widow.
कात्यायन्यर्ध--वृद्धा या काषाय-वसना ऽधवा ॥

1 A female artisan in another's house.
१८ सैरन्ध्री पर-वेश्म-स्था स्व-वशा शिल्प-कारिका ।

1 A female servant.
असिक्नी स्यादवृद्धा या प्रेष्या ऽन्तःपुर-चारिणी ॥

4 A courtesan or harlot.
१९ वारस्त्री गणिका वेश्या रूपाजीवा, ऽथ सा जनैः ।

1 The head of a set of harlots.
सत्कृता वारमुख्या स्यात्, कुट्टनी शम्भली समे ॥
2 A bawd or procuress.

---

वित्यर्थः, योपधत्वाज्जातेर्ङीप्–नास्ति ॥ १४ ॥ ( आचार्यानी ) इन्द्रवरुणेति ( ४।१।४९/५०५ ) ङीषानुकौ आचार्यादणत्वंचेति ( वा० २४७७/५०५ )। पुंयोग इत्येव, ( उपाध्यायानी ) उपाध्यायमातुलाभ्यां वेति ( मातुलोपाध्याययोरानुग्वा ) पक्षे ङीषानुकौ । पुट संश्लेषणे, उभयव्यञ्जना पोटा नपुंसकाख्या ॥ १५ ॥ (वीरपत्नी) नित्यं सपत्न्यादिषु (४।१।३५/४९२) इति नान्तत्वाद्–ऋन्नेभ्यो ङीप् (४।१।५/३०६)। वीरं सूतवती वीरसूः सत्सूद्विषेति (सू० ३।२।६१/२९७५) क्विप् । वीरप्रसूर्जगति भार्गवरेणुकैव ( बा० रा० ? ) वीरस्य प्रसूर्मातेत्यर्थः । जीवत्तोका तु जीवसूः । कोटा तु कटहारिणी । जनयितुं प्रवृत्ता सा प्रजाता । ( प्रसूतिका ) सूतकापुत्रिकावृन्दारकाणां वा ( वा० ४६४/४५३५ ) इति पक्षे–इत्वम्, आख्याग्रहणात्पुंयोगेऽपि ङीप् नास्ति ॥ १६ ॥ विवस्त्रा योषिन्मुक्तकेशीत्यागमः । कोटेन लज्जावशात्कुटिलत्वेन वेति याति कोटवी । दूयन्तेऽस्या मौखर्याद् दूती । संचारयति (संदेशं) प्रापयति संचारिका । कतस्यापत्यमिव कात्यायनी, ऋषिपत्न्याकारत्वात् । त्रिलक्षणेयं, कषायेण रक्तं वस्त्रं शुद्धत्वादस्याः काषायवसना, अधवा–अपुंस्का रण्डेत्यर्थः ॥ १७ ॥ शिल्पं प्रसाधनादि तेन या परवेश्मान्युपजीवति, स्ववशा स्वायत्ता, एकायत्ता न भवतीत्यर्थः । सह-एरं प्रेरणं धरते सैरन्ध्री, चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री स्ववशेति चेति कात्यः । असितपलितयोः क्नम् ङीप् च (वा० २४५३/४९६) प्रादैष्यैष्ययोर्वृद्धिः (प्रादूहोढोढ्येषैष्येषु वा० ३६०५/७३)। द्वे वाक्ये इत्येके तत्र, यन्मुनिः–असिक्नी स्यादवृद्धा या प्रैष्यान्तःपुरयोषिता ॥ १८ ॥ वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री ।

3 A fortune-teller. 8 A woman in her courses.

२० विप्रश्निका त्वीक्षणिका दैवज्ञा, ऽथ रजस्वला ।
स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि ॥

3 The courses. 2 Longing, as in pregnancy.

२१ ऋतुमत्यप्युदक्याऽपि, स्याद् रजः पुष्पमार्तवम् ।
श्रद्धालुर् दोहदवती, निष्कला विगतार्तवा ॥ 2 Past child-bearing.

4 Pregnant. 1 An assemblage of harlots.

२२ आपन्नसत्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।
गणिकाऽऽदेस् तु गाणिक्यं, गार्भिणं, यौवतं गणे ॥
1—of pregnant women. 1—of young women.

2 A twice married woman. 1 Her second husband. 1 One in whose family she presides.

२३ पुनर्भूर् दिधिपूरूढा द्विस् तस्या दिधिषुः पतिः ।
स तु द्विजो ऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥

---

गणः पेटकोऽस्त्यस्याः, गणयतीश्वरानीश्वरौ वा गणिका । वेशे वेश्यावाटे भवा वेश्या । पुण्यस्त्री पणस्त्री च । वारे सेवाक्रमे मुख्या ( वारमुख्या ) । कुट्टयति कुट्टनी । शं श्रेयो भालयति शंभं श्रेयोयुक्तं लाति वा शंभली । चुन्दी देश्याम् ॥ १९ ॥ विप्रश्नो दैवप्रच्छन्नं शुभाशुभेक्षणं वास्त्यस्याः ( विप्रश्निका ) । दैवं शुभाशुभं कर्म जानाति दैवज्ञा, अन्तःपुरस्यापुंस्प्रवेश्यत्वात् । रजोऽस्त्यस्या रजस्वला, रजःकृष्यासुतीति (५।२।१२२/१९१९) वलच् । स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी । अत्रेरपत्यमात्रेयी । (मलिनी) मलिनाद्रजसि ङीप् ( वा० ? ) मलादिन्नन्ताद्वा ङीप् ॥ २० ॥ ऋतू रजोऽस्त्यस्या ऋतुमती । उदकात्संज्ञायां यति उदक्या, उदकमर्हतीति । पुष्पितेति माला । पुष्पमत्यवीरिति प्राच्याः पेठुः, अव्यते रक्ष्यतेऽन्येभ्योऽवीः अवितॄस्तॄतन्त्रिभ्य ईः ( उ० ४३८ ) । अविरात्रेयीत्येके, यत्कात्यः—अविं स्त्रीधर्मिणीं विद्यादिति । पुष्पं सुतफलहेतुत्वाद्रजः । ऋतुरेवार्तवम्, ऋतुः स्त्रीरजोऽत्र, ऋतौ गर्भग्रहणकाले भवं वा, ऋतुः प्राप्तोऽस्य वा । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ( ३।२।१५८/३१३८ ) । दोहदं गर्भिण्यभिलाषोऽस्त्यस्या दोहदवती । निष्क्रान्ता कलाभ्योऽशुद्धिभ्यो निष्कला जीर्णर्तुः ॥ २१ ॥ आपन्नं गृहीतं सत्त्वं गर्भोऽनयापन्नसत्त्वा । गुरुर्गर्भोऽस्या गुर्विणी, व्रीह्यादित्वादिनिः ( ५।२।११६/१९२३ ) । गुर्वीति च भागुरिः । अन्तर्विद्यतेऽस्याः ( अन्तर्वत्नी ), अन्तर्वत्पतिवतोर्नुक् ( ४।१।३२/४८९ ) । गणिकानां समूहो गाणिक्यं, गणिकाया यञिति वक्तव्यं (वा० १२४८/२७१९) इति यञ् । गर्भिणीनां समूहो गार्भिणं, इनण्यनपत्ये ( ६।४।१६४/१२४५ ) इति प्रकृतिभावः ( नस्तद्धित इति टिलोपे प्राप्ते ) । युवतीनां समूहो यौवतं, युवत्या अपुंवदिति गणपाठात् ( भिक्षादिषु ) । भस्याढे तद्धिते ( वा० ८३६/३९२८; ८४२/३९२८ ) इति पुंवद्भावो नास्ति ॥ २२ ॥ पुनर्भवति पुनर्भूः । दिधेष्टि वाच्या भवति दिधिषूः । द्वौ वारौ द्विरूढा संस्कृता, यदाहुः—अक्षता च क्षता चैव पुनर्भवति पुनर्भूः संस्कृता पुनः ( याज्ञ० १-६७ ) । मनुस्त्वन्य-

2 Son of an unmarried woman. २४ कानीनः कन्यकाजातः सुतो, ऽथ सुभगासुतः ।

2 Son of an auspicious mother. सौभागिनेयः स्यात्, पारस्त्रैणेयस् तु पर-स्त्रियाः ॥

1 Son by another's wife.

1 Paternal aunt's son. २५ पैतृष्वसेयः स्यात् पैतृष्वस्रीयश् च पितृ-ष्वसुः ।

1 Maternal aunt's son. सुतो, मातृ-ष्वसुश् चैव,

1 Step-mother's son. वैमात्रेयो विमातृजः ॥

5 A bastard. २६ अथ बान्धकिनेयः स्याद् बन्धुलश् चाऽसतीसुतः ।

कौलटेरः कौलटेयो,

1 A son of a female beggar. भिक्षुकी तु सती यदि ॥

२७ तदा कौलटिनेयो ऽस्याः कौलटेयोऽपि चाऽऽत्मजः ।

5 A son. आत्मजस् तनयः सूनुः सुतः पुत्रः,

स्त्रियां त्वमी ॥

5 A daughter. २८ आहुर् दुहितरं सर्वे, ऽपत्यं तोकं तयोः समे ।

2 Offspring, male or female.

2 A legitimate son. स्व-जाते त्वौरसोरस्यौ,

3 Father. तातस् तु जनकः पिता ॥

थाह–ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता (?) ॥ तस्याः पुनर्भ्वाः पतिः, किं च–पुनर्भूपतिरुक्तश्च पुनर्भूर्दिधिषूस्तथेत्येषोऽप्यूदन्तः, दिधिषूमिच्छत्यात्मन इति क्यच् ( सुप आत्मनःक्यच् ), क्विप् ( अन्येभ्योऽपि दृश्यते ३।२।१३८/३१५८) अग्रेऽनन्यभार्यत्वात्प्रधानं दिधिषूर्यस्य सोऽग्रेदिधिषूः, समासान्तविधिरनित्यः ॥ २३ ॥ ( कानीनः ), कन्यायाः कनीनचेत्यण् ( ४।१।११६/११२९ )। ( सौभागिनेयः ) कल्याण्यादीनामिनङ् ( ४।१।१२६/११३१ ) इति ढगिनङौ। एवं दौर्भागिनेय इत्याद्युह्येयं, हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ( ७।३।१९/११३३ ) इत्युभयपदवृद्धिः, उत्तरत्र अनुशतिकादीनां चेति ( ७।३।२०/१४३८ )। सुत इत्येव, परस्त्री कल्याण्यादिः ॥ २४ ॥ ( पैतृष्वस्रीयः ) पितृष्वसुश्छण् ( ४।१।१३२/११३८ )। ( पैतृष्वसेयः ) ढकि लोपः ( ४।१।१३३/११३९ ) इति ज्ञापकाड्–ढक्–अन्त्यलोपश्च। सुत इत्येव, मातृष्वसुश्च ( ४।१।१३४/१०४ ) इति छणि मातृष्वस्रीयः, ( ४।१।१३३/११३९ ) इति ढकि मातृष्वसेयः। विरुद्धाया मातुरपत्यं वैमात्रेयोऽसोदर्यो भ्राता, शुभ्रादित्वात् ( ४।१।१२३/११२६ ) ढक्, स्त्रीभ्यो ढक् ( ४।१।१२०/२१२३ ) इत्यत्र स्त्रीप्रत्ययग्रहणात्। सांमातुरस्तूभयमातृकः ॥ २५ ॥ बन्धक्या अपत्यं, कल्याणादीनामिनङ् (४।१।१२६/१०४) इति ढगिनङादेशः। बन्धून्–लाति बन्धुला। कुलटाया अपत्यं, स्त्रीभ्यो ढक् (४।१।१२/१०३) (कौलटेरः) क्षुद्राभ्यो वा (४।१।१३१/११३७) इति ढक् ॥२६॥ सा हि भिक्षार्थिनी कुलान्यटति, कुलटाया वा ( ४।१।१२७/११३२ ) इति ढगिनङौ, पक्षे ढगेव क्षुद्रात्वाभावात्, अङ्गशीलहीना हि क्षुद्रा। तनोति कुलं तनयः। सूयते सूनुः। सुवति सुतः। पुन्नरकात्त्रायते पुत्त्रः, पुनाति वा, पुवोह्रस्वश्च (उ०६०४) इति क्त्रः। दारकदायादौ च ॥२७॥ आत्मजादयः स्त्रियां वृत्ता दुहितृवाचकाः। गौरादौ पुत्री। दोग्धि पितरौ दुहिता। (तयोः

| | |
|---|---|
| 4 Mother.<br>2 Sister. | २९ जनयित्री प्रसूर् माता जननी, भगिनी स्वसा । |
| 1 Husband's sister.<br>3 Grand-daughter. | ननान्दा तु स्वसा पत्युर्, नप्त्री पौत्री सुतात्मजा ॥ |
| 1 Husband's brother's wife.<br>1 Brother's wife.<br>2 Maternal uncle's wife. | ३० भार्यास् तु भ्रातृ-वर्गस्य यातरः स्युः परस्परम् ।<br>प्रजावती भ्रातृजाया, मातुलानी तु मातुली ॥ |
| 1 Mother-in-law.<br>1 Father-in-law.<br>1 Paternal uncle.<br>1 Maternal uncle. | ३१ पति-पत्न्योः प्रसूः श्वश्रूः, श्वशुरस् तु पिता तयोः ।<br>पितुर् भ्राता पितृव्यः स्यान्, मातुर् भ्राता तु मातुलः ॥ |
| 1 Wife's brothers.<br>2 Husband's brother.<br>2 Sister's son.<br>1 Daughter's husband. | ३२ श्यालाः स्युर् भ्रातरः पत्न्याः, स्वामिनो देवृ-देवरौ ।<br>स्वस्रीयो भागिनेयः स्याज्, जामाता दुहितुः पतिः ॥ |
| 2 Father's father.<br>1 His father.<br>1 Maternal grand-father. | ३३ पितामहः पितृपिता, तत्-पिता प्रपितामहः ।<br>मातुर् मातामहाऽऽद्येवं, सपिण्डास् तु सनाभयः ॥ 2 Kinsmen. |

---

समे ) पुत्रे दुहितरि च सामान्येन वर्तेते। अपतनमपत् , अपति साध्वपत्यम्। स्तूयते तोकम्। संततिः संतानः, नन्दनोद्वहप्रजाः, [ तन्तुश्च ]। उरसा निर्मिते यञ्चेति-अण्यतौ ( उरसोयच्च उरसोण्च)। तनोति कुलं तातः, स्वार्थेऽण्। जनयति जनकः। पिता। वप्ता च ॥ २८ ॥ या जनित्री त्रिलोक्या (?) इति त्वन्तर्भावितण्यर्थत्वात्। प्रसूयते प्रसूः। मात्यस्यां गर्भो माता। भगं कल्याणमस्त्यस्या भगिनी। सुष्ठ्वस्यते स्वसा, सावसेर्ऋन् ( उ०२५३), न षट्स्वस्रादिभ्यः (४।१।१०/३०८) इति ङीप् नास्ति। न नन्दति भ्रातृजायां ननन्दा, नञि च नन्देः (उ० २५५) इति ऋन्। न पतत्यनया कुलं नप्त्री। पुत्रस्यापत्यं पौत्री सुतस्यात्मजा ॥ २९ ॥ यतते स्पर्धया याता, यतेर्वृद्धिश्च (उ०२५४)इसि ऋन्। (भ्रातृजाया) ऋतो विद्यायोनिसंबन्धेभ्यः (६।३।२३/९८९)। इति षष्ठ्या अलुग्नास्ति, सप्तमीसमासात्, यथा—द्रक्ष्यसि भ्रातृजायाम् (पू. मे.१०) ( मातुलानी ) इन्द्रवरुणेति ( ४।१।४९/५०४ ) ङीषानुकौ। उपाध्यायमातुलाभ्यां वा (मातुलोपाध्याययोरानुग्वा ) इति पक्षे ङीष्, ॥ ३० ॥ पत्युर्माता पत्न्याः श्वश्रूः, पत्न्या माता पत्युः श्वश्रूः, श्वशुरस्योकाराकारलोपश्च( वा० ५२२/६०३९ ) इत्यूङ्। तयोः पतिपत्न्योःपितान्योन्यं श्वशुरः, शु पूजितं कृत्वाश्नुते। ( पितृव्यः ) पितृव्यमातुलमातामहपितामहाः ( ४।२।३६/१२४२ ) इति साधुः। ( मातुलः ) प्राग्वत् ॥ ३१॥ श्यायते श्यालः, स्यम वितर्केऽस्माद्वा ( स्यालः ), पत्युः श्याला इत्यर्थः। स्वामिनः पत्युः-भ्राता कनिष्ठः पत्न्याः, दीव्यति देवा, दिवेर्ऋः (उ० २५६)। अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यरः ( उ० ४१२ ) देवरः। स्वसुरपत्यं स्वस्रीयः, स्वसुश्छः ( ४।१।१४३/११६६ )। जायां मिमीते जामाता ॥३२॥ प्रगतः पितामहात् (प्रपितामहः)। मातुः पिता मातामहः, [ तत्पिता प्रमातामहः ]। समानः पिण्ड एषां, यत्स्मृतिः—

4 A brother of the whole blood. — ३४ समानोदर्य-सोदर्य-सगर्भ्य-सहजाः समाः ।

6 A distant kinsman. — सगोत्र-बान्धव-ज्ञाति-बन्धु-स्व-स्वजनाः समाः ।

1 Relationship. — ३५ ज्ञातेयं, बन्धुता, तेषां क्रमाद् भाव-समूहयोः । 1 An aggregate of kinsmen.

4 A husband. 1 A paramour. — धवः प्रियः पतिर् भर्ता, जारस् तूपपतिः समौ ॥

1 An adulterine. 1 A widow's bastard. — ३६ अ-मृते जारजः कुण्डो, मृते भर्तरि गोलकः ।

2 A brother's son. 2 Brother and sister. — भ्रात्रीयो भ्रातृजो, भ्रातृभगिन्यौ भ्रातरावुभौ ॥

4 Father and mother. — ३७ मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।

2 Husband's or wife's father and mother. — श्वश्रूश्वशुरौ श्वशुरौ, पुत्रौ पुत्रश् च दुहिता च ॥ 1 Son and daughter.

---

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते (म. टीका ३।५)। सप्तमादूर्ध्वं सगोत्राः। समानो नाभिर्मूलमेषां सनाभयः, ज्योतिर्जनपदेति (६।३।८५/१०१६) समानस्य सत्वम् ॥३३॥ समान उदरे शयितः समानोदर्यः, समानोदरे शयितः (४।४।१०८/१६५८) इति यत्। सोदरशब्दात्– सोदराद्यः (४।४।१०९/१६६०), विभाषोदर इति (६।३।८८/१०१६) समानस्य सत्वं वा। समाने गर्भे भवः सगर्भ्यः, सगर्भसयूथसनुताद्यन् (६।३।८५/१०१६), छान्दसोऽपि लोकेऽभिधानात्। सह जायते सहजो भ्राता। समानं गोत्रमेषां सगोत्राः, ज्योतिर्जनपदेति (६।३।८५/१०१६) सत्वम्। ज्ञायते ज्ञातिः। बध्नाति बन्धुः। (बान्धवः) स्वार्थेऽण्। एकः स्वो ज्ञातिवचनः, अन्य आत्मीयार्थः ॥ ३४ ॥ ज्ञातेर्भावो ज्ञातेयं, कपिज्ञात्योर्ढक् (५।१।१२७/१७०२)। बन्धूनां समूहो बन्धुता, ग्रामजनबन्धु (सहाये) भ्यस्तल् (४।२।४३/१२५१), तलि स्त्रीलिङ्गवचनम्। धुनोति धवः। प्रीणाति प्रियः, इगुपधेति (३।१।१३५/२८९७) कः। पाति पतिः, पातेर्डतिः (उ० ४९७)। सेक्ता वरयिता वरश्च। जारयति जारः, दारजारौकर्तरि णिलुक् च (वा० २१८२/३१९०)। उपजातः पतिरुपपतिः ॥ ३५ ॥ भर्तरीत्येव। कुण्डयते कुलमनेन कुण्डः, कुडि दाहे। जारज इत्येव। गुडयते लज्जाकरत्वाद् गोप्यते गोलकः, परनार्यां प्रजायेते द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलक इति स्मृतिः (मनु.३।१७४)। भ्रातुरपत्यं भ्रात्रीयः, भ्रातुर्व्यच्च (४।१।१४४/११६७) इति वा छः। भ्रातृव्यो नानार्थे। भ्राता च भगिनी चेति (भ्रातरौ), भ्रातृपुत्रौस्वसृदुहितृभ्याम् (१।२।६८/१३४) इत्येकशेषः। [एवं पुत्रौ] ॥ ३६ ॥ माता च पिता च मातापितरौ, आनङ् ऋतो द्वन्द्वे (६।३।२५/१२१)। (पितरौ) पितामात्रा (१।२।७०/१३६) इत्येकशेषो वा। मातरपितरावुदीचां (६।३।३२/१२९) इति–अन्यः साधुः। प्रसूर्माता जनयिता चेति द्वौ त्रिसंज्ञौ। (श्वशुरौ) श्वशुरः श्वश्रा (१।२।७१/१३७) इत्येकशेषो वा। [पुत्रश्च दुहिता च प्रागुक्तम्]

4 Husband and wife. — ३८ दम्पती जम्पती जायापती भार्यापती च तौ ।
2 The womb. 2 Amnion. — गर्भाशयो जरायुः स्यादुल्बं च कललो ऽस्त्रियाम् ॥
2 The last month of gestation. 2 A fetus. — ३९ सूतिमासो वैजननो, गर्भो भ्रूण इमौ समौ ।
5 A eunuch. — तृतीयाप्रकृतिः षण्ढः क्लीबः पण्डो नपुंसके ॥
3 Childhood. 2 Youth or man-hood. — ४० शिशुत्वं शैशवं बाल्यं, तारुण्यं यौवनं समे ।
3 Old age. 2 An assemblage of old men. — स्यात् स्थाविरं तु वृद्धत्वं, वृद्धसंघे ऽपि वार्धकम् ॥
1 Greyness of hair. 2 Decrepitude. — ४१ पलितं जरसा शौक्ल्यं केशादौ, विस्रसा जरा ।
4 An infant. — स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ॥
2 A child. 3 A young man. — ४२ बालस्तु तु स्यान् माणवको, वयःस्थस्तु तरुणो युवा ।
6 An old man. — प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ॥

---

॥ ३७ ॥ राजदन्तादौ (२।२।३१/९०२) जायापत्योर्जायाशब्दस्य दंभावो जंभावो वा निपात्यते, दं भार्येति निघण्टुः । गर्भं आशेतेऽत्र गर्भाशयः । जरामेति जरायुः । उलति वृणोत्युल्वः । कलयति के ललति वा कललः शुक्रशोणितसमवायः, प्रसिद्ध्यास्य पर्यायो नोक्तः, अस्त्रीत्वविधानार्थं तु विधिः । उल्वपर्यायः कलल इत्येके, यन्मुनिः–तदुल्वं कललं च तत् ॥ ३८ ॥ दशमे मासि सूतव इति श्रुतेः, नवमे दशमे मासि प्रबलैः सूतिमारुतैः ॥ निःसार्यते बाण इव यन्त्रच्छिद्रेण सत्वर इति स्मृतेश्च नवमो दशमो वा मासो, विजनने भवो वैजननः । गीर्यते गर्भः । भ्रियते भ्रूणः कुक्षिस्थः । स्त्रीपुंसाभ्यामन्या तृतीया प्रकृतिः, लिङ्गान्तरत्वात् । शाम्यति शण्ढः, [ षण्ढोपि ] । क्लीबते क्लीबः । पण्डते पण्डः, पिण्डोपि । न स्त्रीपुंसौ नपुंसकं, नभ्राण्नपादिति (६।३।७५/७५९) साधुः, स नपुंसको भवेदिति भाष्यात्पुंस्यपि ॥ ३९ ॥ शिशोर्भावः शैशवं, प्राणभृज्जातीत्यञ् (५।१।१२९/१७९४) । यूनो भावो यौवनं, हायनान्तयुवादिभ्योण् (५।१।१३०/१७९५)। (वार्धकं) गोत्रोक्षोष्ट्रेत्यत्र (४।२।३९/१२४६) वृद्धाच्चेतिवक्तव्यात् (वा० २७१६/१२४७) वुञ्, मनोज्ञादित्वात् (द्वन्द्वमनोज्ञादिभ्यश्च (५।१।१३३/१७९८) भावकर्मणो (१।३।१३/२६७९) रप्याहुः, यथा–वार्धके मुनिवृत्तीनाम् (रघु० १-८) ॥ ४० ॥ पलति शोभतेऽनेन पलितं, पल गतौ । आदिशब्दाद्रोमादौ च । विस्रंसतेऽनया कचाङ्गं विस्रसा । जीर्यन्त्यनया जरा, षिद्भिदादिभ्योऽङ् (३।३।१०४/३२८१) । उत्ताना शेते–उत्तानशया, अधिकरणे शेतेः (३।२।१५/२९२९) इत्यत्र–उत्तानादिषुकर्तृषु (वा० १९९८/२९२९) इत्यच् । डिम्भेति प्राक् पक्षिक्रमेणोक्तं इह मानुषक्रमात् । स्तनं पिबति स्तनपा, (सुपिस्थ इत्यत्र) सुपीति योगविभागात्कः । स्तनं धयति स्तनंधयी, नासिकास्तनयोर्ध्माधेटोः (३।२।२९/२९४४) इति खश्, धेटष्टित्वाद्ङीप् । स्त्रीलिङ्गेन निर्देशः स्त्रीप्रत्ययप्रदर्शनार्थः ॥ ४१ ॥ बलति(ते) प्राणिति बालः, ज्वलादित्वाण्णः (३।१।१४०/२९०२), वाडृ आप्लावेऽस्माद्वा

3 One very aged.
3 Elder brother; first born.
5 Younger brother.

४३ वर्षीयान् दशमी ज्यायान्, पूर्वजस् त्वग्रियोऽग्रजः ।
जघन्यजे स्युः कनिष्ठ-यवीयोऽवरजानुजाः ॥

3 Feeble; thin.
3 Strong; lusty.
5 Corpulent; pot-bellied.

४४ अमांसो दुर्बलश् छातो, बलवान् मांसलों ऽसलः ।
तुन्दिलस् तुन्दिभस् तुन्दी बृहत्कुक्षिः पिचिण्डिलः ॥

4 Flat-nosed.
3 Having much, or fine, hair.
2 Flaccid.

४५ अवटीटो ऽवनाटश् चा ऽवभ्रटो नतनासिके ।
केशवः केशिकः केशी, वलिनो वलिभः समौ ॥

2 Deformed.
3 A dwarf.
2 Sharp-nosed.
2 Noseless.

४६ विकलाङ्गस् त्वपोगण्डः, खर्वो ह्रस्वश् च वामनः ।
खरणाः स्यात् खरणसो, विग्रस् तु गतनासिकः ॥

---

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः (?) ॥ स्यार्थे कन् ( माणवकः ) । वयसि प्रत्यग्रे तिष्ठति वयस्थः । तरति तरुणः । यौति मिश्रीभवती स्त्रिया युवा । प्रगतं वयोऽस्य प्रवयाः । तिष्ठति स्थविरः । वर्धते स्म वृद्धः, एवमादौ गड्डुरिकाप्रवाहेण भूते क्तः, वर्तमाने युक्तः शीलितादिवत् । जिनाति स्म जीनः, ग्रहिज्यावयीति (६।१।१६ / २४१२) संप्रसारणं, संप्रसारणस्येति (६।३।१३९ / १००४) दीर्घः, ल्वादित्वात् (८।४।२७ / १८६५) निष्ठा नत्वम् । जीर्यति स्म जीर्णः, युकः–किति (७।२।११ / २३८१) इत्यनिट् ( जरन् ) जीर्यतेरतृन् (३।२।१०४ / ३०९२) ॥ ४२ ॥ अतिशयेन वृद्धो वर्षीयान्, ईयसुनि प्रियस्थिरेति (६।४।१५७ / २०१६) वर्षादेशः । दशमोवस्थाविशेषोऽस्यास्ति दशमी, वयसिपूरणात् (५।२।१३० / १९३६) इतीनिः, यन्मुनिः–इष्टो वयोदशोपेतः सप्तमी दशमीति च । अतिशयेन वृद्धो ज्यायान्, ज्यच (५।३।११ / २०३१), वृद्धस्य च (५।३।६२ / २०१३) इति ज्यादेशः, ज्यादादीयसः (६।४।१६० / २०१२) इत्यात्वम् । अग्रे जातोऽग्रियः, अग्राद्यत् (४।४।११६ / ३४६२), घच्छौच (४।४।११७ / ३४६३) इति घः । अग्र्याग्रीयौ च । अग्रिमपाठे, अग्रादिपश्चाड्डिमच् ( वा० २८४४ / १३११ ) जघन्यजः पश्चाज्जातः । अत्यर्थं युवा कनिष्ठो यवीयांश्च, युवाल्पयोः कनन्यतरस्यां (५।३।६४ / २०२९), स्थूलदूरेति (६।४।१५६ / २०१५) यणादिलोपः पूर्वस्य गुणः । एवं कनीयान् यविष्ठश्च । अवरे जायतेऽवरजः ॥ ४३ ॥ छ्यति स्म छातः, छो छेदने । मांसमस्यास्ति मांसलः, सिध्मादित्वात् (५।२।१३९ / १९४९) लच् । अंसावस्य स्तः ( अंसलः ), वत्सांसाभ्यां कामबले (५।२।१३९ / १९४५) इति लच् । तुन्दं पिचण्डश्चास्यास्ति, तुन्दादिभ्य इलच्च (५।२।१३९ / १९४५) इति चादिनिठनौ । उदरिलोपि । तुन्दिरस्यास्ति तुन्दिभः, तुन्दिवलिवटेर्भः (५।२।१३९ / १९४५) ॥ ४४ ॥ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः (५।२।३१ / १८३२), नतनासिकश्चिपिटघोणः । नतायां नासिकायां नासानमनेप्येते वर्तन्ते । प्रशस्ताः केशाः सन्त्यस्य केशवः, केशाद्वोन्यतरस्याम् (५।२।१०९ / १९३६), वलिस्त्वक्संकोचोऽस्यास्ति, पामादित्वान्नः (लोमादिपामादीति ५।२।१०० / १९०७) । (वलिभः) तुन्दिवलिवटेर्भः (५।२।१३९ / १९४५) ॥ ४५ ॥ पूयतेऽपसार्यते पोगण्डः । खर्वति खर्वः ।

2 Having a nose like a hoof. 2 Long shanked. 2 Knock-kneed. 2 Bandy-legged.

४७ खुरणाः स्यात् खुरणसः, प्रज्ञुः प्रगतजानुकः ।
ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्, संज्ञुः संहतजानुकः ॥

2 Deaf. 2 Hump-backed. 2 Having a crooked arm. 2 Small, short, or thin. 2 Bald; closeshaved. 2 A cripple.

४८ स्यादेडे बधिरः, कुब्जे गडुलः, कुकरे कुणिः ।
पृश्निरल्पतनौ, श्रोणः पङ्गौ, मुण्डस्तु मुण्डिते ॥

2 Squint-eyed. 2 Lame. 3 A freckle or mark. 2 A mole or spot.

४९ वलिरः केकरे, खोडे खञ्जस्, त्रिषु जराऽवराः ।
जडुलः कालकः पिप्लुस्, तिलकस्तिलकालकः ॥

2 Health. 2 Physicking. 5 Medicament.

५० अनामयं स्यादारोग्यं, चिकित्सा, रुक्प्रतिक्रिया ।
भेषजौषध-भैषज्यान्यगदो जायुरित्यपि ॥

---

ह्रसति ह्रस्वः। वामोऽस्यातीति वामनः । निखर्वः खट्टरः[ नः ]खर्व इति नाममाला। खरा तीक्ष्णा खरस्येव वा नासास्य खरणाः, खुरखाराभ्यांवानस्वक्तव्य (वा० ३३६३/८५७), पक्षे–अञ्नासिकायाःसंज्ञायां नसचा स्थूलात् ( ५।४।११८/८५६ ), पूर्वपदात्संज्ञायामगः ( ८।४।३/८५७ ) इति णत्वम् । नःक्षुद्रः क्षुद्रनासिकः । ( विग्रः ) वेर्ग्रोवक्तव्यः ( वा० ८५९/३२९५ ) ॥ ४६ ॥ खुराकारा नासिकास्य खुरणाः–विकटघोणः । प्रगते विरले वातादिदोषात्तथोर्ध्वे संहते च जानुनी अस्य, प्रसंभ्यां जानुनोर्ज्ञुः (५।४।१२९/८६८), ऊर्ध्वाद्विभाषा ( ५।४।१३०/८६९ ) ॥ ४७ ॥ एडपशुरिव–एडः । बद्धौ कर्णावस्य बधिरः । कुत्सित उब्जः, कुब्जः, पृषोदरादिः ( ग.सू.२३४ )। गडुरस्यास्ति गडुलः, सिध्मादित्वात् ( ५।४।९७/१९०४ ) लच् । कुण शब्दे, कुपाणिः कुणिरिति नैरुक्ताः। कलंवकस्ववाक्कर्णः खलतिस्त्विन्द्रलुप्तकः । स्पृश्यते पृच्छति वा पृश्निः। ( श्रोणः ) श्रोणृ संघाते, कुटिलजङ्घापादः । मुण्ड्यते मुण्डः ॥ ४८ ॥ वलते चेष्टते वालिरं नेत्रं तद्योगाद्वलिरः । के मूर्ध्नि करोत्याक्षिणी चलत्तारकत्वात्केकरः, एनमुपाध्यायः काच[ व ]र इत्याख्यत् । (खोडः) खुड प्रतिघाते । (खञ्जः) खजि वैकल्ये । वण्डो दुश्चर्मा द्विनग्नोऽपि। जराशब्दादुत्तरा उत्तानशयादयः खञ्जन्तास्त्रिलिङ्गाः। जडति जडुलः, जडुलोजडत्वाद्वा। काल एव कालकः। अपिप्लवते पिप्लुः । तिलप्रतिकृतिस्तिलकः। तिल इव कालकस्तिलकालकः, देहे कृष्णं लक्ष्म ॥४९॥ आमयस्यभावोऽनामयं, अव्ययं विभक्तिसमीपेति ( २।१।६/६५२ ) अर्थाभावे व्ययीभावः । कितेर्व्याधिप्रतीकारे सन् । भिषज्यत्यनेन भेषजं, भिषज कण्ड्वादिः, अनन्तावसथेतिहभेषजाद्दिति ( ५।४।३७/२०९१ ) निर्देशाद् गुणः, भेषं रोगं जयतीति दुर्गः। ( औषधं ) ओषधेरजाताविति ( ५।४।२३/२१०५ ) स्वार्थेऽण्। ( भैषज्यं ) अनन्तावसथेतिहभेषजाञ्ञ्यः ( ५।४।२३/२०९१ ) स्वार्थे। अविद्यमानो गदोऽस्मिन्नगदः । जयति रोगाञ्जायुः, कृवापाजीत्युण् ( उ० १ ) ॥ ५० ॥

| | | |
|---|---|---|
| 7 A dog. | २२ | कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । |
| 1 A mad dog. | | शुनको भषकः श्वा स्यादलर्कस् तु स योगितः ॥ |
| 9 A dog trained for for chase. | २३ | श्वा विश्वकद्रुर् मृगया-कुशलः, सरमा शुनी । 2 A bitch. |
| 9 A village hog. 1 Any young animal. | | विट्चरः सूकरो ग्राम्यो, वर्करस् तरुणः पशुः ॥ |
| 4 Chase ; hunting. | २४ | आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् । |
| 1 A deer wounded on its right side. | | दाक्षिणाऽरुर् लुब्ध-योगाद् दक्षिणेर्मा कुरङ्गकः ॥ |
| 10 A thief or robber. | २५ | चौरैकागारिक-स्तेन-दस्यु-तस्कर-मोषकाः । |
| | | प्रतिरोधि-परास्कन्दि-पाटच्चर-मलिम्लुचाः । |

---

देशभेदाद् भिन्नाः । म्लेच्छत्यव्यक्तं वक्ति म्लेच्छः । रिष्टया मालभटा भिल्ला नाहलाश्चान्त्यजाः पृथक् । विध्यति व्याधः, श्याद्व्यधेति ( ३।१।१४१ / २९०३ ) णः । मृगान् याति मृगयते वा मृगयुः । लुभ्यते ( स्म ) गृध्यति मांसे लुब्धकः ॥ २१ ॥ कुले गृहे भवः कौलेयकः, कुलकुक्षीति ( ४।२।९६ / १३१६ ) ढकञ् । सरमाया अपत्यं सारमेयः । कोकते कुक्, चोरग्राहिकुक्शब्दं वा कुरति ( कुक्कुरः ), कुर शब्दे । मृगान्दशति मृगदंशकः । शुनति शुनकः, शुन गतौ । भषति कुत्सितं वाशते भषकः । शवति श्वयति वा श्वा । मण्डली च । रथ्यामृगो देश्याम् । स श्वा संजातगरण्यो गोल्यते वार्यते दशनभयादलर्क उन्मत्तः श्वा ॥ २२ ॥ विश्वं कन्दस्याह्वयते विश्वकद्रुः, विगतं श्वकदनमस्येत्येके, विश्वकं द्रवति वा । सरति सरमा देवशुनी, विशेषवृत्तिरपि सामान्येऽभिधानात् । विषं गूथं चरति ( अति ) विट्चरः । सूयते बहून् सुकरः । वर्कतेऽवीन् वर्करः, वृक आदाने ॥२३ ॥ आचोद्यन्ते त्रास्यन्ते प्राणिनोऽत्रेत्याच्छोदनं, चुदेश्छत्वम् । मृगान्व्ययति मृगव्यं, मृगव्येति मुनिः व्येञ् संवरणे । आखेट्यन्ते प्राणिनोऽत्राखेटः, खिट उत्त्रासने । मृग्यन्ते प्राणिनोऽस्यां मृगया, मृगयाटाट्येत्यङ् ( परिचर्यापरिसर्येति )। पापर्द्धिश्च । लुब्ध [ क ] संबन्धाद् दक्षिणे पार्श्वेऽरुर्व्रणमस्य दक्षिणारुः ( दक्षिणेर्मा ), दक्षिणेर्मा लुब्धकयोग इति ( ५।४।१२६ / ८६५ ) साधुः, व्रणोऽस्त्रियामीर्ममरुरित्युक्तम् ॥ २४ ॥ चोरयति चोरः, स्वार्थेण् ( चौरः ), चुराशीलो वा, छत्रादित्वाण्णः ( ४।४।६२ / १६१२ ) । एकस्मिन्नसहायेऽगारे भव ऐकागारिकः, ऐकागारिकट् चौरे ( ५।१।११३ / १७७६ ) । स्तेनयति स्तेनः, स्तेन चौर्ये, श्यास्त्यहृञविभ्य इति ( उ० २०४ ) इनचि स्त्येनः स्यात् । दस्यत्युपक्षिणोति दस्युः । तत्करोति तस्करः, तद्बृहतोःकरपत्योश्चौरदेवतयोःसुट् तलोपश्च ( वा० ३७१३ / १०७१ ) । मुष्णाति मोषकः । प्रतिरुणद्धि प्रतिरोधी । परानास्कन्दति परास्कन्दी । पाटयंश्चरति पाटच्चरः, पटच्चरे जीर्णवस्त्रे भवो वा । मलिनैर्म्लोचयति मलिम्लुचः, म्लुच स्तेयकरणे । पारिपन्थिकः पश्यतोहरश्च, वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति ( वा० ३८९७ / १०७९ ) षष्ठ्या अलुक् ।

| | |
|---|---|
| 4 Theft, robbery.<br>1 Booty.<br>1 A net, chain, or cage. | २६ चौरिका स्तैन्य-चौर्ये च स्तेयं, लोप्त्रं तु तद्-धने ।<br>वीतंसस् तूपकरणं बन्धने मृग-पक्षिणाम् ॥ |
| 2 A snare or trap.<br>2 A net.<br>5 A cord, rope or string. | २७ उन्माथः कूटयन्त्रं स्याद्, वागुरा मृगबन्धनी ।<br>शुल्बं वराटकं स्त्री तु रज्जुस् त्रिषु वटी गुणः ॥ |
| 2 Rope and bucket of a well.<br>2 A loom.<br>2 Threads. | २८ उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः ।<br>पुंसि वेमा वायदण्डः, सूत्राणि नरि तन्तवः ॥ |
| 2 Weaving.<br>1 Plaistering.<br>1 A doll or puppet. | २९ वाणिर् व्यूतिः स्त्रियौ तुल्ये, पुस्तं लेप्याऽऽदि-कर्मणि ।<br>पाञ्चालिका पुत्रिका स्याद् वस्त्र-दन्ताऽऽदिभिः कृता ।<br>‘ जतु-त्रपु-विकारे तु जातुषं त्रापुषं त्रिषु ’ ॥ १ ॥ |

---

व्यलीकं चातिसंधानं व्यञ्जनं च प्रतारणम् ॥ २५ ॥ चोरस्य भावश्चौरिका, मनोज्ञादित्वात्, द्वन्द्वमनोज्ञादिभ्यश्च (५।१।१३३/१७९८) वुक् । ब्राह्मणादित्वात्ष्यञि गुणवचनब्राह्मणादिभ्यः कर्मणि च (५।१।१२४/१७८८) चौर्यम् । स्तेनस्य भावः कर्म वा सौन्यं, स्तेनादिनियोगाविभागात्ष्यम् ( इ० )। स्तेनाद्यन्नलोपश्च (५।१।२५/१७९०) इति स्तेयम् । लुप्यते लोप्त्रं चौर्यधनम् । मृगादिबन्धननिमित्तं जालवागुरादिसाधनं, वितन्यत इति वीतंसः, वितस्यते बध्यतेऽनेन वा, तसिः सौत्रः ॥ २६ ॥ ऊर्ध्वंपातान्मथ्यतेऽनेनोन्माथः । छलेन यस्यतेऽनेन कूटयन्त्रं, पाशयन्त्रमित्येके । ( मृगबन्धिनी ) रज्जुरिति शेषः । अवागुरयति मृगान् वागुरा जालाकृतिः । शु[ सु ]पूजार्थेऽव्ययं, पूजितमीयते शु[ सु ]ल्यं, शुल्यं वा । वट्यते वेष्टयते वटाकरः, वटी च सृज्यते । रज्जुः । गुण्यतेऽभ्यस्यते गुणः । वटा गुण इति पृथवाहुः । यैर्वेष्टनैर्द्विगुणा त्रिगुणा वा रज्जुर्वेष्ट्यते वटीगुण इत्येके ॥ २७ ॥ उद्घाट्यते प्रकाश्यतेऽम्भोऽनेनोद्घाटनं, ऊर्ध्वं हन्य [ घात्यं ] तेऽनेनेत्युद्घातनमिति कौटिल्यः । प्रहेररघट्टादेर्जलमूर्ध्वं बाह्यतननोद्वाहनम् । पादावर्तोऽपि । वयन्त्यनेन वेमा । उप्यते पीड्यते यन्त्रे सूत्रं येनेति वापस्तदर्थो दण्डो वायदण्डः, वायदण्ड इति तु युक्तम् । सूयते सूज्यते वा पटोऽनेन सूत्रम् । तन्यतेऽनेन तन्तुः । नरि पुंसि ॥ २८ ॥ व( वा )णनं वाणिः, वयनं वा, अत एव निष्प्रवाणिर्नवः पटः । विवयनं व्यूतिः, ऊतीयूतीति (३।३।९७/३२७४) साधुः । तुल्या च तुल्या च तुल्ये । पुस्यतेऽभिमर्द्यते मृदत्र पुस्तं, पुस्त आदरे वा । पञ्चालदेशे भवा पाञ्चालिका यया बालाः खेलन्ति । ( पुत्रिका ) पुत्रात्कृत्रिम, इति ( ग० ) कन् यावादिभ्यः कन् (५।४।२९/२०९७) । आदिशब्दाच्चर्मलवाद्यैः, स्यात्सालभञ्जिका स्तम्भे लेप्येनाञ्जलिकारिका ।

4 A basket. ३० पिटकः पेटकः पेटा-मञ्जूषा, ऽथ विहङ्गिका ।
2 A peg.
1 Its string. भारयष्टिस्, तदाऽऽलम्बि शिक्यं काचो, ऽथ पादुका ॥
3 A shoe.
1 A boot. ३१ पादूरुपानत् स्त्री, सैवाऽनुपदीना पदाऽऽयता ।
3 A thong.
1 A whip. नद्ध्री वर्ध्री वरत्रा स्यादश्वाऽऽदेस् ताडनी कशा ॥
3 A vulgar lute. ३२ चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी ।
2 Goldsmith's scales.
3 A touchstone. नाराची स्यादेषणिका, शाणस् तु निकषः कषः ॥
2 An iron chisel. ३३ व्रश्चनःपत्रपरशुरीषिका तूलिका समे । 2 A pencil or brush.
2 A crucible.
2 Bellows. तैजसावर्तनी मूषा, भस्त्रा चर्मप्रसेविका ॥

---

त्रपुजतुनोःषुक् ($\frac{४|३|१३८}{१५९८}$) ॥ २९ ॥ पेटति पिटः, पिट संघाते, कः । ण्वुलि पेटिकः । पीड गहने (अवगाहने), अस्मात्पीडा, पीङ् पानेऽस्मात्पेटेति श्रीभोजः । मञ्जु मनोज्ञं कृत्वा शस्त्राद्यैरुष्यतेऽत्र मञ्जूषा । आद्यौ पेटारिकायां परौ महत्याम् । विहंगप्रतिकृतिश्चार्मादिमयी, या भित्त्यादौ लम्बमाना स्थाप्यते प्रयाणके च संचार्यते (विहंगिका)। भारोद्वहनाय यष्टिः, चतुर्दण्डिकेति सभ्याः, शिक्याधारस्कन्धग्राह्यो लगुड इति द्रवि[मि]डाः, विहंगमेत्येके । तदालम्बो भारालम्बः, तस्या आलम्बते वा । शक्नोति वोढुं शिक्यं, अघ्न्यादिः (उ० ५५१)। कच्यतेऽनेनेति काचः, कच बन्धने, यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥ ३० ॥ पद्यतेऽनया पादूः, णित्कसिपद्यर्तेरित्यूः (उ० ८५)। (पादुका) स्वार्थे कन्, केऽण इति ($\frac{७|४|१३}{८३४}$) ह्रस्वः । उपनह्यति पादमुपानत्, नहिवृतिवृषीति ($\frac{६|३|११६}{१०३७}$) दीर्घः । पादत्राणं च । अनुपदं पादायामेन बद्धानुपदीना, अनुपदसर्वान्नेति ($\frac{५|२|९}{१८१०}$) खः । नह्यति बध्नाति नध्री । वर्धते दीर्घीभवति चर्मरज्जुत्वाद्वर्ध्री । व्रियतेऽनया वरत्रा, वरत्रा वैत्रवैणवीति तु चाणक्याः सूत्राध्यक्षे (?) उपचारादाख्यत् । कशति कशा चर्मयष्टिः ॥ ३१ ॥ चण्डालस्येयं चाण्डालिका । कव्य(ड्य)ते तन्त्रीभिराव्रियते कटो(ण्डो)लवीणा किन्नर्याख्या । नरमञ्चति नराङ् तस्येयं, नाराची । अन्विष्यते वर्णोऽनयेत्येषणिका, स्वर्णतुलेतीह युक्तम् । श्यति तनूकरोति शाणः । निकष्यतेऽत्र निकषः, गोचरसंचरेति ($\frac{३|३|११९}{३२९८}$) चकारात्साधुः, पुंसि संज्ञायां घो वा ($\frac{३|३|११८}{३२९६}$) । एवं कषः, निकषोपलः इत्येके, पचाद्यच् नन्दिग्रहीति, ($\frac{३|२|१३४}{२८९६}$) मणिकारादिभाण्डमाहुः, यन्मुनिः-शाणस्तु निकषोपलः ॥ ३२ ॥ वृश्चति छिनत्ति व्रश्चनः । पत्त्राकारः पत्त्राणां वा परशुः (पत्त्रपरशुः)। एषत्येषिका, ईष उञ्छे । काष्ठलोहमयी शलका तूलिका, तूल निष्कर्षे । ईषिकेत्येके, शलाकेषिकयोस्तूलिरिति दुर्गो भेदेनाह । तैजसं हेमादि-आवर्त्यते द्रवीक्रियतेऽस्याम् । मूयते मूषा, मूङ्

| | | | |
|---|---|---|---|
| 2 A gimlet or auger. | ३४ | आस्फोटनी वेधनिका, कृपाणी कर्तरी समे । | 2 Scissors or shears. |
| 2 A carpenter's chisel. | | वृक्षादनी वृक्षभेदी, टङ्कः पाषाणदारणः ॥ | 2 A hatchet. |
| 2 A saw. | ३५ | क्रकचो ऽस्त्री करपत्रमारा चर्मप्रभेदिका । | 2 Shoemaker's knife. |
| 3 An image of iron. 1 An art. | | सूर्मी स्थूणाऽयःप्रतिमा, शिल्पं कर्म कलाऽऽदिकम् ॥ | |
| 8 An image; statue or picture. | ३६ | प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया | |
| 2 Resemblance. | | प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् । | |
| 12 Like, similar. (In composition) Like. | ३७ | वाच्य-लिङ्गाः समस् तुल्यः सदृक्षः सदृशः सदृक् । | |
| | | साधारणः समानश् च स्युरुत्तर-पदे त्वमी ॥ | |
| | ३८ | निभ-संकाश-नीकाश-प्रतीकाशोपमाऽऽदयः । | |
| 11 Wages or hire. | | कर्मण्या तु विधा-भृत्या-भृतयो भर्म वेतनम् ॥ | |

---

बन्धने । बभस्ति भक्षयतीव स्थाप्यं भस्त्रा । चर्ममयी, प्रसीव्यते प्रसेविका, प्रसेवकोऽपि ॥ ३३ ॥ आस्फोटयते विध्यते चानया मौक्तिकादि ( आस्फोटनी, इ० ) । कल्प्यते छिद्यतेऽनया कृपाणी। कर्त्यतेऽनया कर्तरी । वृक्षोऽद्यते छेद्यतेऽनेन शस्त्रकेण वृक्षादनः । टङ्क्यतेऽनेन टङ्कः, टकि बन्धने, हन्यमानः–टंशब्दं कायति वा ॥ ३४ ॥ क्रशब्दोच्चारणेन कचति क्रकचः । करसंचार्यं शस्त्रपत्त्रं करपत्त्रं, करशब्दोच्चारणेन पतति वा । इयर्त्यनयेत्यारा, भिदादौ–आराशस्त्र्यां ( ग० ) साधुः । चर्मसी वनी च । सुवति सूर्मी, शोभनोर्मिरित्येके । तिष्ठति स्थूणा, यच्छाश्वतः–स्थूणा स्तम्भेऽथ सूर्म्यां च (७२२)। अयोमयी प्रतिकृतिः अयःप्रतिमा), यत्स्मृतिः–सूर्मीं ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः । शिनोति शिल्पं, शिञ् निशाने, शिल उञ्छेऽस्मादूा । कला गीताद्याश्चतुःषष्टिः । आदिशब्दः प्रकारे ॥३५॥ प्रतिमीयतेऽनेनेति प्रतिमानं, प्रतिमा च । प्रतिबिम्ब्यते प्रतिबिम्बं, बिम्बसदृशं वा । प्रतियात्यतेऽनया प्रतियातना, यत निकारोपस्कारयोः । अर्च्यतेऽर्चा । प्रतिनिधीयते प्रतिनिधिर्मुख्यसदृशः । प्रतिरूपं[ प्रतिच्छन्दः ] प्रतिकायश्च । उपमितिरुपमा । केचिदेतत्पूर्वैः संबध्नन्ति ॥ ३६ ॥ समति समः । तुलया संमितस्तुल्यः, नौवयोधर्मेति ( $\frac{४।४।९१}{१६४३}$ ) यत् । ( सदृक्ष इ० ) समान इव दृश्यते, त्यदादिषु दृशोरनालोचने कञ्च ( $\frac{३।२।६०}{४२९}$ ) इत्यत्र समानान्ययोश्चेतिवक्तव्यात् ( वा० $\frac{२०२९}{२९७४}$ ) क्सः कञ् क्विन् च, दृग्दृशवतुर्ष्विति ( $\frac{६।३।८९}{१०२७}$ ) समानस्य सः । समानमाधारणं मानं चास्य साधारणः समानश्च ॥ ३७ ॥ वाच्यलिङ्गास्तुल्यार्थाश्चैते, यथा चन्द्रनिभं मुखं, पद्मसंकाशम् । नियतं भाति निभम् । समं काशते संकाशः । आदिशब्दाच्चन्द्रप्रतिमः, पितृरूपः, आयासभूत इत्यादि । चन्द्रेण निभ इत्यादौ न भवति समास एवोत्तरपदत्वस्य रूढेः । कर्मणि साधु कर्मण्या, भर्मण्या वा । विधीयतेऽनया विधा, लक्ष्ये भोजनपिण्डे रूढा । (भृत्या, इ०) भ्रियतेऽनयेति, संज्ञायांसमजेति ( $\frac{३।३।९९}{३२७६}$ ) क्यप्, स्त्रियां क्तिन्, मनिन्, ल्युट् । वीयतेऽद्यते वेतनं,

13 Spirituous liquor.

३९ भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ।
सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ॥

४० गन्धोत्तमा-प्रसन्नेरा-कादम्बर्यः परिस्रुता ।

2 Eating what excites thirst.

मदिरा कश्य-मद्ये चाप्यवदंशस् तु भक्षणम् ॥

2 A tavern.
2 Tippling.
4 Spirit, distilled from Bassia.

४१ शुण्डापानं मदस्थानं, मधुवारा मधुक्रमाः ।
मध्वासवो माधवको मधु माध्वीकम-द्वयोः ॥

3 Rum.
2 Vinous liquor for distilling.

४२ मैरेयमासवः सीधुर्, मेदको जगलः समौ ।
संधानं स्यादभिषवः, किण्वं पुंसि तु नग्नहूः ॥

2 Distillation.
2 Ferment.

---

वी गत्यादौ ॥ ३८ ॥ भरणे साधु भरण्यम् । मूलेनानाम्यं मूल्यं, नौवयोधर्मेतियत् ( ४।४।९१ / १६४३ )। निर्विश्यते भुज्यते निर्वेशः । पण्यते-आभाष्यते पणः, नित्यंपणः-परिमाण इति ( ३।३।६६ / ३२४३ ) साधुः । सूयते परिवास्यते सुरा । हलिनो बलस्य प्रिया । जहाति लज्जामनयेति हाला, हलति विलिखत्यङ्गं वा, ज्वलादित्वाण्णः, ज्वलितिकसन्तेभ्यो णः ( ३।१।१४० / २९०२ )। परिस्रवति परिस्रुत्, परिस्रुता च । वरुणात्मजा वारुणी समुद्रोत्थत्वात् ॥ ३९ ॥ गन्धेनोत्तमा । प्रसीदति प्रसन्ना, अच्छसुरा । एति भ्राम्यत्यनया-इरा । कुत्सितताम्बरस्य नीलवाससः इयं कादम्बरी, सहार्थे तृतीया । माद्यत्यनया मदिरा । कशादेशे भवं कश्यम् । मदे साधु मद्यं, माद्यन्त्यनेन वा, कृत्यल्युटो बहुलं ( ३।३।११३ / २८४१ ) इति करणे गदमचरेति ( ३।१।१०० / २८४८ ) यत् । स्वादुरसा मदिष्ठा कल्यं हारहूरं कापिशायनं च । अवदश्यते पानरुचिजननार्थमवदंशः, खरविशदमभ्यवहार्यम् । चर्वणमुपदंशश्च ॥ ४० ॥ शुण्य( न्य )ते शुण्डा, शुण( न ) गतौ । पानमदयोरास्पदं कल्यपालगृहैकदेशः । शाश्वतस्तु-कुञ्जराणां करः शुण्डा शुण्डा कादम्बरी मता ( ३४५ )। ( मधुवारा इ० ) क्रमेण मधुपानावसराः । गौडी पैष्टी च माध्वी च फलोत्था च सुरा स्मृतेति सुराया भेदानाह । माक्षिकमिश्र आसूयते मध्वासवः । मधुनो विकारो मधुना कृतो वा माधवकः, कुलालादित्वाद्वुञ् ( ४।३।११८ / १४९८ )। मन्यते मधु, माद्यन्त्यनेन वा । मृद्वीकाया विकारो मार्द्वीकं, माध्वीकमित्युपाध्यायः । मद्यस्योक्तत्वाद्-अद्वयोरित्येके पेठुः, तन्न-सामान्यविशेषरूपत्वात् ॥४१॥ मिरायां देशे भवो गौड्याः सुराया विशेषो मैरेयः । शेरतेऽनेन शीधुः, शीङो धुक्-(उ.४७८)। शीधोरित्येके पठित्वा शीधुप्रतिकृतिक इति व्याख्यन् । यदाहुः-मध्वासवस्तु मैरेयं, तन्न-यन्माला-मैरेयो गदितः शीधुः, (इक्षोः) [अ] पक्वरसोऽपि । मेद्यति स्निह्यत्यनेन मेदकः । भृशं गलति जगलः स्वच्छः सुरासंधानद्रव्यपङ्कः । संधीयते संधानं वंशांकुरफलादीन् बहुकालं संधाय क्रियते । अभिषूयते चिरं क्लिद्यतेऽभिषवः । भावसाधनो वा द्वौ सुरासंधौ वर्तेते । कि(क)णति कीयते वा सुराऽनेन किण्वं माषदलन्या(ला)दि सुराबीजाख्यम् । नग्नेनाह्वयते स्पर्धते सुराच्छादनाभावान्नग्नहूः, नग्नहुर्मालायाम् ॥ ४२ ॥

2 Yest, barm, froth. — ४३ कारोत्तरः सुरामण्ड, आपानं पानगोष्ठिका । — 2 Place where people drink together.

2 A drinking vessel. — चषकोऽस्त्री पानपात्रं, सरको ऽप्यनुतर्षणम् ॥

5 A gamester. — ४४ धूर्तो ऽक्षदेवी कितवो ऽक्षधूर्तो द्यूतकृत् समाः ।

2 Sureties. — स्युर् लग्नकाः प्रतिभुवः, सभिका द्यूतकारकाः ॥ — 2 Keepers of gaming houses.

4 Gaming. — ४५ द्यूतो ऽस्त्रियामक्षवती कैतवं पण इत्यपि ।

3 Dice. — पणोऽक्षेषु ग्लहो, ऽक्षास् तु देवनाः पाशकाश् च ते ॥

9 Moving a piece at play. — ४६ परिणायस् तु शारीणां समन्तात् नयनेऽस्त्रियाम् ।

2 A checkered board or cloth. — अष्टापदं शारिफलं, प्राणिद्यूतं समाह्वयः ॥

2 A matsh of cocks, &c. — ४७ उक्ता भूरि-प्रयोगत्वादेकस्मिन् ये ऽत्र यौगिकाः, ।

ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गाऽन्तरे ऽपि ते ॥

इति शूद्र-वर्गः १०, अत्र मूलश्लोकाः ४६॥, क्षे० ॥.

इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने ।

द्वितीयः काण्डो भूम्याऽऽदिःसाऽङ्ग एव समर्थितः

---

कारेण क्रियावशान्मख्यः कारोत्तमः । सुरोर्ध्वे स्वच्छो भागः (सुरामण्डः) । आपीयतेऽस्मिन्नापानम् । पानाय गोष्ठी–आसनबन्धः पानगोष्ठी, गावो नानाविधा वाचस्तिष्ठन्त्यत्रेति । चषन्त्यनेन चषकम् । गल्वर्कोऽपि, स्फाटिके पात्रेऽयं रूढः, विवक्षातो विध्यनुवादौ । सरसि सरकः । अनुतृष्यन्त्यनेनानुतर्षणं सुरापरिवेषणम् । चषकपर्यायावेताविस्येके, यन्मुनिः–चषकश्चानुतर्षश्च सरकश्चेति ॥ ४३ ॥ धूर्वति हिनस्ति धूर्तः । अक्षैर्दीव्यति विजिगीषते तच्छीलोऽक्षदेवी । किं तवास्तीति पणते कितवः । लगति लग्नकः । प्रतिनिधिर्भवति प्रतिभूः । सभा द्यूतशालास्त्यस्य सभिकः । द्यूतं कारयति द्यूतकारकः । द्वौ द्वौ भिन्नार्थौ, आद्ययोः सर्वसामान्यात ॥ ४४ ॥ दीव्यतेऽस्मिन् द्यूतम् । कितवस्य कर्म कैतवम् । पणनं पणः । दुरोदरं नानार्थे । पण्यते पणो बन्धकः । गृह्यते ग्लहः अक्षेषु ग्लहः (३।३।७० / ३२४७) इत्यप । अक्ष्णोत्यक्षः । दीव्यत्यनेन देवनः । पाश्यते बध्यतेऽनेन पाशकः, प्राशक इत्येके ॥४५॥ वामदक्षिणयोः शारीणां परिणयनं परिणायः, परिन्योर्नीणोर्द्यूताभ्रेषयोः (३।३।३७ / ३२०९) इति घञ् । शृणातीति शारी खेलनी । अष्टौपदान्यस्याष्टापदम् । शारयः फलन्त्यत्र शारिफलं खेलनाधारः, चतुरङ्गफलकादि । आकर्षो नानार्थे । प्राणिभिर्मेषकुक्कुटादिभिर्द्यूतं प्राणिद्युतम् । संघर्षेणाह्वयन्तेऽत्र समाह्वयः ॥४६॥ येऽत्र संबन्धिशब्दा लक्ष्यबाहुल्यादेकस्मिन्–लिङ्गे–उक्तास्ते तद्गुणयोगादन्यत्र वर्तमाना लिङ्गान्तरेऽप्युत्प्रेक्ष्याः, यथा कर्मण्या भृतिः, कर्मण्यं वेतनं, हलिप्रिया सुरा, हलिप्रियं मद्यं, अक्षवती सभा, अक्षवद् द्यूतम् । एवं मालाकारी स्त्री, अक्षदेविनी स्त्री । तथानुपदानं पादत्राणम् ॥ ४७ ॥ इति शूद्रवर्गः ॥१०॥ इति श्रीभट्टक्षीरस्वामिकृतटीकासहितेऽमरकोशोद्घाटने भूम्यादिकाण्डं द्वितीयं समाप्तम् ।

# तृतीयं सामान्य–काण्डम् ।

१ विशेष्य-निघ्नैः संकीर्णैर् नानाऽर्थैरव्ययैरपि ।
लिङ्गाऽऽदि-संग्रहैर् वर्गाः सामान्ये वर्ग-संश्रयाः ॥

२ स्त्री-दाराऽऽद्यैर् यद् विशेष्यं यादृशैः प्रस्तुतं पदैः ।
गुण-द्रव्य-क्रिया-शब्दास् तथा स्युस् तस्य भेदकाः ॥

3 Fortunate, well-fated. — ३ सुकृती पुण्यवान् धन्यो, महेच्छस् तु महाशयः । — 2 Magnanimous.

2 Good hearted. 2 Perseverant, diligent. — हृदयालुः सुहृदयो, महोत्साहो महोद्यमः ॥

10 Skilful, conversant. — ४ प्रवीणे निपुणाऽभिज्ञ-विज्ञ-निष्णात-शिक्षिताः ।
वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ॥

---

श्रीगणेशाय नमः । विशेष्यनिघ्नो विशेषणम् । विशेषणादिभिर्हेतुभूतैर्ये पञ्च वर्गास्ते काण्डद्वयोक्तसाधारण्यात्सामान्यकाण्डेऽस्मिंस्तृतीयेऽवान्तरवर्गान् संश्रयन्ति, यथा नानार्थे कान्तादिवर्गाः, अव्ययवर्गेऽनेकार्थैकार्थवर्गौ, लिङ्गशेषवर्गे स्त्रीलिङ्गादिवर्गाः । वर्गसंग्रह इत्येके पेठुः, सामान्यकाण्डे ये पञ्च वर्गाः स वर्गसंग्रह इति योजना । आदिशब्दः प्रकारे ॥ १ ॥ स्त्र्यादिभिः पदैर्यादृग्लिङ्गैर्यादृग्वचनैश्च विशेषणैर्यद्विशेष्यं भेद्यं प्रस्तुतं तस्य गुणादिशब्दास्तथा तादृग्लिङ्गास्तादृग्वचनाश्च भेदका विशेषणानि भवन्ति । गुणशब्दा यथा प्रवीणा स्त्री, प्रवीणा दाराः, प्रवीणं कलत्रम् । द्रव्यशब्दा यथा दण्डिनी स्त्री, दण्डिनो दाराः, दण्डि कलत्रम् । क्रियाशब्दा यथा पाचिका स्त्री, पाचका दाराः, पाचकं कलत्रम् । दाराद्यमिति पाठो युक्तः । स्त्रीनराद्यैरित्येके, स्त्रीपुंनपुंसकैरित्यर्थः । क्षेमंकरोऽरिष्टतातिः शिवतातिः शिवंकर इति वक्तव्यम् ॥ २ ॥ धने साधुर्धन्यः । महानाशयोऽस्य महाशय उदाराभिलाषः । उदीर्ण उद्भटोदारावुदात्तश्च महामनाः । प्रशस्तं हृदयमस्त्यस्य हृदयालुः, हृदयादेरा( त्वा )लुरन्यतरस्याम् ( वा० ३२१६/१९२८ ) । स एव हि हृदयेन सह वर्तते, अन्ये मांसखण्डे सत्यप्यहृदयाः, यन्ममैव–हृदयं तद्विविङ्क्ते यद्भावमन्यच्चलं पलम् । शतैकीयाः सहृदया गण्यन्ते कथमन्यथा ॥ चिद्रूपोऽपि । ( महोत्साहः ) उद्यमवानित्यर्थः ॥ ३ ॥ प्रकृष्टा वीणास्येति प्रवीणः, मुख्यार्थं परित्यज्य निपुणे रूढः, यदाहुः ( कुमारिलभ० )– निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् । क्रियन्तेऽद्यतनैः काश्चित्काश्चिन्नैव त्वशक्तित इति । एवं निष्णातकुशलौ । निपुणति निपुणः, शोभनकर्मत्वात् । अभितो जानात्यभिज्ञः । विजानाति विज्ञः, इगुपधज्ञेतिकः ( ३।१।१३५/२८९७ ) । निष्णा(स्ना)ति

2 Venerable.
2 Dubious.
3 Meriting a fee or reward.

५ पूज्यः प्रतीक्ष्यः, सांशयिकः संशयापन्नमानसः ।
दक्षिणीयो दक्षिणार्हस् तत्र दक्षिण्य इत्यपि ॥

4 Munificent.
2 Long-lived.

६ स्युर् वदान्य-स्थूललक्ष्य-दानशौण्डा बहुप्रदे ।
जैवातृकः स्यादायुष्मानन्तर्वाणिस् तु शास्त्रवित् ॥

2 Skilled in sacred sciences.

2 Acutely investigating.
4 Joyful, cheerful.

७ परीक्षकः कारणिको, वरदस् तु समर्द्धकः ।
हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः ॥

2 Granting a prayer.

3 Ssd, perplexed.
2 Regretting.
3 Sincere, candid.

८ दुर्मना विमना अन्तर्मनाः, स्यादुत्क उन्मनाः ।
दक्षिणे सरलोदारौ, सुकलो दातृभोक्तरि ॥

2 Liberal in giving and using.

---

निष्णातः, निनदीभ्यांस्नातेः कौशले ( ८।३।८९/३०८२ ) इति षत्वम् । शिक्षा संजातास्येति शिक्षितः । विज्ञानं प्रयोजनमस्येति वैज्ञानिकः । कृतं संस्कृतं मुखमस्येति कृतमुखः । प्रशस्तं कृतं कर्मास्येति कृती । कुशान्—लाति कुशलः, ते हि व्युत्पन्नैरादातुं शक्याः । कृतकर्मा कृतकृत्यः कृतार्थश्च ॥ ४ ॥ प्रतीक्षणीयो मुख्यत्वात् ( प्रतीक्ष्यः ) । ( सांशयिकः ) संशयमापन्न इति ( ५।१।७३/१७३७ ) ठक् । ( दक्षिणीय इ० ) दक्षिणामर्हति, कडङ्करदक्षिणाच्छ चेति ( ५।१।६९/१७३३ ) छयतौ । तत्र दक्षिणार्थे ॥ ५ ॥ वदति दीयतामिति वदान्यः, वदेरान्यः ( उ० ३८४ ) । वदन्योऽपि, साधौ यत् तत्र साधुः ( ४।४।९८/१६५० ) । (स्थूललक्षः) स्थूलं लक्षयत्यालोचयति ददातीति यावत् । दाने शौण्डः शक्त उपचारात्, शुण्डा हि पानमदस्थानं तत्र भवः शौण्डः । जीवति जैवातृकः, जीवेरातृकन्वृद्धिश्च ( उ० ७९ ) । ( अन्तर्वाणिः ) अन्तर्वाण्यस्य ॥ ६ ॥ करणं प्रयोजनमस्य कारणिकः, मठादौ दानार्थं ब्राह्मणपरीक्षिता । आक्षपटलिकोऽपि । करणेनाधिकार ( रि ) वर्गेण चरतीति वा । समृध्नोति संवर्धयति समर्धुकः । हृष्यति हर्षमाणः, ताच्छील्यवयोवचनशक्तिषु चानश् ( ३।२।१२९/३१०९ ) । हर्षाद्विकारं याति विकुर्वाणः । प्रकृष्टं मनोऽस्य प्रमनाः ॥ ७ ॥ अन्तर्लीनं मनोऽस्यान्तर्मनाः । उद्गतं मनोऽस्योत्कः, येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितमिति धर्ममात्रेऽपि, उत्क उन्मना इति ( ५।२।८०/१८८० ) साधुः । सोत्कण्ठश्च । ( दक्षिण इ० ) दक्षते, सरति, उदियर्ति च । शोभना कलाऽस्य सुकलः, दाता भोक्ता च यः ॥ ८ ॥ तत्परं यस्य स तत्परस्तन्निष्ठः । प्रसिनोति स्म प्रसितः, षिञ् बन्धने । आसजति स्माऽऽसक्तः । प्रियमर्थं प्रेप्सुः, उच्छब्द उद्योगार्थः सुशब्दः शोभनार्थः, उत्कादिवत्कन् ( ज्ञा० ) । प्रत्येकमेति प्रतीतः । प्रथते प्रथितः । ख्यायते ख्यातः । विद्यते प्रतीयते वित्तः,

3 Diligent, attentive.
2 Zealously active.

९ तत्परे प्रसिताऽऽसक्ताविष्टार्थोद्युक्त उत्सुकः ।

6 Known, celebrated, famous.

प्रतीते प्रथित-ख्यात-वित्त-विज्ञात-विश्रुताः ॥

2 Noted for good qualities.

१० गुणैः प्रतीते तु कृतलक्षणाऽऽहतलक्षणौ ।

3 Opulent, wealthy.

इभ्य आढ्यो धनी, स्वामी त्वीश्वरः पतिरीशिता ॥

10 An owner or master.

११ अधिभूर् नायको नेता प्रभुः परिवृढो ऽधिपः ।

2 Every way happy.

अधिकर्धिः समृद्धः स्यात्, कुटुम्बव्यापृतस् तु यः ॥

3 Attentive to support his family.

१२ स्यादभ्यागारिकस् तस्मिन्नुपाधिश् च पुमानयम् ।

1 Handsome and well-shaped.

वराऽङ्ग-रूपोपेतो यः सिंहसंहननो हि सः ॥

1 Acting fearlessly.

१३ निर्वार्यः कार्य-कर्ता यः संपन्नः सत्त्व-संपदा ।

2 Dumb.
2 Fatherly.

अवाचि मूको, ऽथ मनोजवसः पितृसंनिभः ॥

2 Giving a girl in marriage.

१४ सत्कृत्याऽलङ्कृतां कन्यां यो ददाति स कूकुदः ।

4 Prosperous, happy.

लक्ष्मीवाँल् लक्ष्मणः श्रीलः श्रीमान्, स्निग्धस् तु वत्सलः ॥

2 Affectionate.

---

वित्तो भोगप्रत्यययोः (८।२।५८ / ३०४१) इति साधुः ॥ ९ ॥ कृताः प्रसिद्धा लक्षणरूपा गुणा यस्याऽसौ कृतलक्षणः । आहतान्युद्घोषितानि लक्षणानि यस्याऽसावाहतलक्षणः । इभमर्हति– इभ्यः, दण्डादित्वाद्यत् (५।१।६६ / १७३१) । आध्यायन्ति तमाढ्यः, कः, पृषोदरादिः (६।३।१०९ / १४३४) । स्वमस्त्यस्य स्वामी, स्वामिन्नैश्वर्ये (५।२।१२६ / १९३२) इति साधुः । ईष्टे तच्छील ईश्वरः, स्थेशभासेति (३।२।१७५ / ३१५५) वरच् । पातीति पतिः॥१०॥ अध्युपरि भवत्यधिभूः । नयति नियुङ्क्ते नायकः । प्रभवति प्रभुः, विप्रसंभ्यइति (३।२।१८० / ३१६०) डुः । परिवृंहति परिवृढः, प्रभौ परिवृढइति (७।२।२१ / ३०६१) साधुः । ग्रामणीरग्रणीश्च ॥११॥ कुटुम्बे कलत्रादौ व्यापृतः, तत्पोषणोद्युक्तः, अभितोऽगारे भवोऽभ्यागारिकः । उपाधीयत उपाधिः । सिंहस्येव संहननं देहोऽस्य सिंहसंहननः ॥१२॥ निर्धार्यः समुदायाद् गुणैः पृथग्व्यपदेश्यः । सत्त्वसंपच्चित्तोत्कर्षः, तया संपतन् (न्नः) संपद्यमानः । नास्ति वागस्य–अवाक् । मूयते बध्यते वागस्य मूकः, मूङ् बन्धने । मनो जवतेऽस्मिन् पिताऽयमिति धावति मनोजवसः, औणादिकोऽसः–चमसादिवत्, मनोजेऽभिलाषे वसति वा । पितेव सम्यङ् निभाति पितृसंनिभः ॥ १३ ॥ कोकत आदत्ते धर्मं कूकुदः, कुङ् शब्द इत्यस्य वा रूपमाकूतवत्, ब्राह्मे विवाहे दाता, यन्मनुः–आच्छाद्य चार्हयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ( ३-२७ ) ॥ लक्ष्मीरस्त्यस्य लक्ष्मणः, लोमादिपामादीति (५।२।१०० / १९०७) लक्ष्म्या अच्चेतिणः ( वा० ? ) । श्रियं लाति श्रीलः, सिध्मादित्वा-

4 Compassionate. १५ स्याद् दयालुः कारुणिकः कृपालुः सूरतः समाः ।
5 Unrestrained. स्वतन्त्रो ऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥

4 Dependent. १६ परतन्त्रः पराधीनः परवान् नाथवानपि ।
5 Docile. अधीनो निघ्न आयत्तो ऽस्वच्छन्दो गृह्यको ऽप्यसौ ॥

2 A sweeper. 2 Dilatory, slow. 2 Acting inconsiderately. १७ खलपूः स्याद् बहुकरो, दीर्घसूत्रश् चिरक्रियः ।
जाल्मोऽसमीक्ष्यकारी स्यात्, कुण्ठो मन्दः क्रियासु यः ॥
1 Indolent.

2 Competent to an act. 2 Laborious. 2 Finishing carefully. १८ कर्मक्षमो ऽलङ्कर्मीणः, क्रियावान् कर्मसूद्यतः । 1 Engaged in a business.
स कार्मः कर्मशीलो यः, कर्मशूरस् तु कर्मठः ॥

2 Working for hire. 2 Bathing after mourning. १९ भरण्यभुक् कर्मकरः, कर्मकारस् तु तत्-क्रियः । 1 Working without wages.
अपस्नातो मृतस्नात, आमिषाशी तु शौष्कुलः ॥
2 Eating fish and flesh.

---

लुज्वा (५।२।९७/११०४)। रलयोरेकत्वस्मरणात्–श्लीलः। वत्सोऽस्यास्तीति वत्सलः, वत्सांसाभ्यां कामबले (५।२।९८/११०५) इति लच् ॥ १४ ॥ (दयालुः, इ०) दया कृपा चाऽस्त्यस्य। करुणाप्रयोजनमस्त्यस्य कारुणिकः। सुष्ठु रमते सूरतः, सूरोऽर्क इव तपति वा, डः। स्व आत्मा तन्त्रं मुख्योऽस्य स्वतन्त्रः। अपगतमावरणं नियन्ताऽस्येत्यपावृतः। स्वेन–ईर्ते तच्छीलः स्वैरी, स्वादीरेरिणोः (वा० ३६०६/७३) इति वृद्धिः। स्वश्छन्दोऽभिप्रायोऽस्य स्वच्छन्दः। निष्क्रान्तोवग्रहान्नियन्त्रणात्तो निरवग्रहः। निर्यन्त्रणो निरङ्कुशो यथाकामी च ॥१५॥ परोऽध्युपर्यस्य पराधीनः, अषडक्षाशितेति (५।४।७/२०७९) खः। परो नियन्ताऽस्त्यस्य परवान्। अधि–उपरीनोऽस्याऽधीनः। निहन्यते निघ्नः, घजर्थैकविधानम् (वा० २२०४/२२३४) आयत्यते नियुज्यते–आयत्तः। गृह्यते गृह्यकः, पदास्वैरिवाह्येति (३।१।११९/२८७०) क्यप् ॥ १६ ॥ खलं पुनाति खलपूः। बहु करोति बहुकरः, दिवाविभेति (३।२।२१/२९३५) टः, अत एत बहुकरी मार्जनी, बहुधान्यार्जक इत्येके। दीर्घं चिरेण सुवति सूत्रयते वा दीर्घसूत्रः। जडति जाल्मः। (कुण्ठः) कुठि आलस्ये। मन्दोऽलसः ॥१७॥ अलं कर्मणेऽलंकर्मीणः, पर्यादयोग्लानाद्यर्थेचतुर्थ्येति (वा० ? ) समासः, अषडक्षाशितेति (५।४।७/२०७९) खः। (क्रियावान्) नित्ययोगेव (म) तुप् (का०)। (कार्मः) कार्मस्ताच्छील्ये (६।४।१७२/१६७३) इति साधुः। कर्मणि घटते कर्मठः, कर्मणि घटोऽठच् (५।२।३५/१८३६) ॥ १८ ॥ कर्मणि साधु कर्मण्यं वेतनं भुङ्क्ते कर्मण्यभुक्। कर्म करोति कर्मकरः, कर्मणि भृतौ (३।२।२२/२९३६) इति टः। (कर्मकारः) कर्मण्यण् (३।२।१/२९१३), विना भृतिं कर्मसंपादकः। (अपस्नातः) अपेति विरुद्धार्थः। (मृतस्नातः) मृतसंस्कारार्थं स्नापितः। शुष्कली

4 Hungry.
2 Feeding at another's cost.
3 Gluttonous.

२० बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ।
पराऩ्नः परपिण्डादो, भक्षको घस्मरोऽद्मरः ॥

3 Shamelessly voracious.
2 Selfishly voracious.

२१ आद्यूनः स्यादौदरिको विजिगीषा-विवर्जिते ।
उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदर-पूरके ॥

2 Eating every body's.
5 Covetous, greedy.
3 Very covetous.

२२ सर्वान्नीनस् तु सर्वान्नभोजी, गृध्नुस् तु गर्धनः ।
लुब्धोऽभिलाषुकस् तृष्णक्, समौ लोलुप-लोलुभौ ॥

2 Mad ; insane.
2 Misbehaving.
4 Drunk.
9 Lustful.

२३ सोन्मादस् तून्मदिष्णुः स्यादविनीतः समुद्धतः ।
मत्ते शौण्डोत्कट-क्षीबाः, कामुके कमिता ऽनुकः ॥

---

मांसोपलक्षणं, तामत्ति शौष्कलः [ शाष्कलः ], शेषे ( ४।२।९२ / १३१२ ) इत्यण् ॥ १९ ॥ बुभुक्षा संजाताऽस्य ( बुभुक्षितः ) । क्षुध्यति स्म क्षुधितः । अत्तुमिच्छति जिघत्सुः । अशनमिच्छति, सुप आत्मनः क्यच् ( ३।१।८ / २६५७ ), अशनायोदन्येति ( ७।४।३४ / २६६१ ) साधुः, ततः क्ते, इट् । परादन्नमस्य परान्नः । अत्ति तच्छीलोऽद्मरः, सृघस्यदः क्मरच् ( ३।२।१६० / ३१४७ ), निर्देशात्पक्षे घस्लादेशः, घस्लृ अदने वा ॥ २० ॥ आ—ईषद्दीव्यति स्म—आद्यूः, दिवोऽविजिगीषायां ( ८।२।४९ / ३०२८ ) इति नत्वम् । उदरेण भृतः ( उदरे प्रसितः ) औदरिकः, उदराट्ठगाद्यूने ( ५।२।६७ / १८६७ ) । आत्मानं बिभर्त्यात्मंभरिः, आत्मोदरयोर्भृञः ( ? ) इति खिः । उदरंभरिरपि । ( कुक्षिंभरिः ) कुक्षौ-चेतिवक्तव्यात् ( वा० ? ) खि( श्च ) । स्वोदरयोः क्रमादात्मोदरयोः पूरकः ॥ २१ ॥ सर्वाण्यन्नानि भक्षयति सर्वान्नीनः, अनुपदसर्वान्नायानयमिति ( ५।२।९ / १८१० ) खः । ( गृध्नुः ) त्रसिगृधीति ( ३।२।१४० / ३१२० ) क्नुः । ( गर्धनः ) जुचङ्क्रम्येति ( ३।२।१५० / ३१३० ) युच् । अभिलषति तच्छीलोऽभिलाषुकः, लषपतपदेत्युकञ् ( ३।२।१५४ / ३१३४ )। तृष्यति तच्छीलस्तृष्णक्, स्वपितृषोर्नजिङ् ( ३।२।१७२ / ३१५२ ), तृष्णग्जान्तः, लुब्धे—उपचारः । तृषितस्तर्षिता, पिपासितश्च । भृशं लुम्पति भृशं लुभ्यति ( लोलुप इ० ), यङ्लुगन्तादच् । केचित्पूर्वैः संबध्नन्ति । लालसो लम्पटश्च ॥ २२ ॥ उन्माद्यति तच्छील उन्मदिष्णुः—भूताद्याविष्टः, अलंकृञ्निराकृञिति ( ३।२।१३६ / ३११६ ) इष्णुच् । ( अविनीतः ) निर्मर्यादोऽपि । मद्येन माद्यति स्म मत्तः । शुण्डायां भवः शौण्डः शुण्डाऽस्त्यस्य वा, अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानात् ( वा० ३३९७ ) । उत्क्रान्तः कटीछादनादुत्कटः, उद्रिक्तो वा, संप्रोदश्च कटच् ( ५।२।२९ / १८३० ) । क्षीवते स्म क्षीवः, क्षीवृ मदे, अनुपसर्गात्फुल्लक्षीवेति ( ८।२।५५ / ३०३५ ) साधुः । कामयते तच्छीलः ( कामुक इ० ), लषपतपदेत्युकञ् ( ३।२।१५४ / ३१३४ ), तृन् ( ३।२।१३५ / ३११५ ) ॥२३॥

२४ कम्रः कामयिता ऽभीकः कमनः कामनोऽभिकः ।
विधेयो विनयग्राही वचनेस्थित आश्रवः ॥

4 Compliant.

२५ वश्यः प्रणेयो, निभृत-विनीत-प्रश्रिताः समाः ।
धृष्टे धृष्णग् वियातश् च, प्रगल्भः प्रतिभान्विते ॥

2 Governable.
3 Modest.
3 Impudent, shameless.
2 Bold, present.

२६ स्यादधृष्टे तु शालीनो, विलक्षो विस्मयान्विते ।
अधीरे कातरस्, त्रस्ते भीरु-भीरुक-भीलुकाः ॥

2 Ashamed.
2 Astonished.
2 Confused.
4 Timid.

२७ आशंसुराशंसितरि, गृहयालुर् ग्रहीतरि । श्रद्धालुः श्रद्धया युक्ते, पतयालुस् तु पातुके ॥

2 Wishing blessings.
2 Disposed to take.
1 Faithful ; believing.
2 Habitually falling.

---

( कम्रः ) नमिकम्पीति ( ३।२।१६७ / ३२४७ ) रः । ( कमनः ) अनुदात्तेतश्चेति ( ३।२।१४९ / ३१२९ ) युच्, औणादिकस्त्वपरः । कामनः कमनोऽभिक इति तु युक्तः पाठः, आयादय आर्धधातुके वा ( ३।१।३१ / २३०५ ) इति पक्षे कमेर्णिङ् । अनुकाभिकाभीकः कमितेति ( ५।२।७४ / १८७४ ) अन्वभिभ्यां के ( कनि ) साधवः । [ छेको विदग्धे व्यसनिपञ्चभद्रावुपप्लुते । वेश्यापतिर्भुजंगः स्यात्षिङ्गः पल्लविको विटः ॥ (?) ] विधातव्यो विधेयो यथेष्टं विनियोज्यः । विनयः शास्त्रजः संस्कार इन्द्रियजयो वा । आश्रृणोति वाक्यमाश्रवः ॥ २४ ॥ ( वश्यः ) वशं गतः ( ४।४।८६ / १६३८ ) इति यत् । प्रणेतव्य आयत्तः ( प्रणेयः ) । प्रणेयान्ताः षडेकार्था इत्येके । निभृतोऽचपलः । प्रश्रयति प्रश्रितः । धृष्णोति स्म धृष्टः, धृषिशसी वैयात्ये ( ७।२।१९ / ३०५९ ) इतीडभावः । धृष्णोति तच्छीलो धृष्णुः, त्रसिगृधीति ( ३।२।१४० / ३१२० ) क्नुः । धृषेश्चेतिवक्तव्यात् ( ३।२।१४० / ३१२० ) नजिङि धृष्णक् । विरुद्धं याति स्म वियातः । प्रगल्भते प्रगल्भः । प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ( रुद्रः ), प्रतिभात्यस्यामिति ( प्रतिभा ) । प्रत्युत्पन्नमतिस्तत्कालधीश्च ॥ २५ ॥ शालां प्रवेष्टुमर्हति शालीनः, शालीनकौपीन इति ( ५।२।२० / १८२१ ) साधुः । विरुद्धं लक्षयते विरुद्धं लक्षमस्य वा विलक्षः, निष्प्रतिपत्तिरित्यर्थः । ईषत्तरति कातरः, कतरस्यायं वा, अत्र कातरा स्त्रीति न स्यात् । इतो निद्रालवन्तास्ताच्छील्ये । त्रस्यति त्रस्नुः, त्रसिगृधीति ( ३।२।१४० / ३१२० ) क्नुः । ( भीरुः, इ० ) बिभेति तच्छीलः, भियः क्रुक्लुकनौ ( ३।२।१७४ / ३१५४ ), क्रुकन्वक्तव्याच्च ( वा० २१४५ / ३१५४ ) । दरितो भीतस्त्रस्तश्चकितश्च ॥ २६ ॥ ( आशंसुः ) सनाशंसभिक्ष उः ( ३।२।१६८ / ३१४८ ) । गृह्यते गृहयालुः, स्पृहिगृहीति ( ३।२।१५७ / ३१३८ ) आलुच् । श्रद्धधाति तच्छीलः, श्रद्धालुः । आद्यः पतिश्चोरादिकोऽदन्तः, पतयति पतयालुः, स्पृहिगृहीति ( ३।२।१५७ / ३१३८ ) आलुच् । पतति तच्छीलः पातुकः, लषपत-

2 Bashful.
2 Civil ; polite.
२८ लज्जाशीलेऽपत्रपिष्णुर्, वन्दारुरभिवादके ।

3 Mischievous.
2 Thriving ; growing.
शरारुर् घातुको हिंस्रः, स्याद् वर्द्धिष्णुस् तु वर्द्धनः ॥

2 Jumping up.
२९ उत्पतिष्णुस् तूत्पतिता, ऽलङ्करिष्णुस् तु मण्डनः ।
2 Inclined to ornament.

3 Faring well.
2 Stationary.
भूष्णुर् भविष्णुर् भविता, वर्तिष्णुर् वर्तनः समौ ॥

3 Obstructive.
2 Very smooth, wet.
३० निराकरिष्णुः क्षिप्नुः स्यात्, सान्द्रस्निग्धस् तु मेदुरः ।

3 Knowing ; intelligent.
2 Expanding.
ज्ञाता तु विदुरो विन्दुर्, विकासी तु विकस्वरः ॥

4 Flowing or creeping.
३१ विसृत्वरो विसृमरः प्रसारी च विसारिणि ।

6 Patient, content.
सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥

3 Passionate ; wrathful.
३२ क्रोधनोऽमर्षणः कोपी, चण्डस् त्वत्यन्तकोपनः ।
2 Very passionate.

2 Wakeful.
2 snoring, as in sleep.
जागरूको जागरिता, घूर्णितः प्रचलायितः ॥

---

पदेत्युकञ् ( ३।२।१५४/३१३४ ) ॥ २७ ॥ ( अपत्रपिष्णुः ) अपत्रपते तच्छीलः, आज्यलंकृञिति वक्तव्यात् ( वा० ३।२।१३६/३११६ ) इष्णुच् । वन्दते तच्छीलः ( वन्दारुः ), शॄवन्द्योरारुः ( ३।२।१७३/३१५३ ) । ( शरारुः, इ० ) शृणाति हन्ति हिनस्ति च तच्छीलः, शॄवन्द्योरारुः ( ३।२।१७३/३१५३ ), लषपतपदेत्युकञ् ( ३।२।१५४/३१३४ ), नमिकम्पीति ( ३।२।१६७/३१४७ ) रश्च । ( वर्धिष्णुः, इ० ) अलंकृञिति ( ३।२।१३६/३११६ ) इष्णुच्, अनुदात्तेतश्चेति ( ३।२।१४९/३१२९ ) युच् । भवति तच्छीलः ( भूष्णुः ), ग्लाजिस्थश्चग्स्नुः ( ३।२।१३९/३११९ ) ( भविष्णुः, इ० ) भुवश्चेति ( ३।२।१३८/३११८ ) इष्णुच्, तृन् ( ३।२।१३५/३११५ ) । ( वर्तिष्णुः, इ० ) इष्णुच्, युच्च ॥ २९ ॥ क्षिपति तच्छीलः क्षिप्नुः, त्रसिगृधीति ( ३।२।१४०/३१२० ) क्नुः । [ सान्द्रशब्दोऽत्यन्तार्थो भवति ] सान्द्रः पीनः स्निग्धश्च (सान्द्रस्निग्धः) । मेद्यति मेदुरः, भञ्जभासमिदो घुरच् ( ३।२।१६१/३१४१ ) । वेत्ति तच्छीलो विदुरः, विदिभिदिच्छिदेः कुरच् ( ३।२।१६२/३१४२ ) । वेत्ति विन्दुः, विन्दुरिच्छुः इति साधुः । (विकासी) विकसति तच्छीलः, वौ कस (ष) लसेति घिनुण् ( ३।२।१४३/३१२३ ) । ( विकस्वरः ) स्थेशभासपिसकसो वरच् ( ३।२।१७५/३१५५ ) ॥ ३० ॥ ( विसृत्वरः ) विसरति तच्छीलः, इण्नश्जीति ( ३।२।१६३/३१४३ ) क्वरप् । ( विसृमरः ) सृघस्यदः क्मरच् ( ३।२।१६०/३१४० ) । ( प्रसारी ) प्रे लपसृद्रुमथेति ( ३।२।१४५/३१२५ ) घिनुण् । ( सहिष्णुः, इ० ) सहेरिष्णुच्, युच्च । ( क्षन्ता ) क्षमेस्तृन्, ऊदित्वाद्वेट् । ( तितिक्षुः ) तिजेः क्षमायाम् ( वा० १६८८/२३९४ ), गुप्तिज्किद्भ्य इति ( ३।१।५/२३९३ ) सन्, सनाशंसेति ( ३।२।१६८/३१४८ ) उः । ( क्षमी ) शमित्यष्टाभ्यो घिनुण् ( ३।२।१४१/३१२१ ) ॥ ३१ ॥ ( क्रोधनः ) क्रुधमण्डार्थेभ्यश्चेति ( ३।२।१५१/३१३१ ) युच् । कोपनो रोषणश्च । ( चण्डः )

3 Sleepy, sluggish. 2 Asleep. 2 Averting the face. 2 Down-looked.

३३ स्वप्नक् शयालुर् निद्रालुर्, निद्राण-शयितौ समौ ।
पराङ्मुखः पराचीनः, स्यादवाङप्यधोमुखः ॥

1 Adoring deities. 1 Going every-where. 1 Accompanying. 1 Moving tortuously.

३४ देवानञ्चति देवद्र्यङ्, विष्वद्र्यङ् विष्वगञ्चति ।
यः सहाऽञ्चति सध्र्यङ् स, स तिर्यङ् यस् तिरोऽञ्चति ॥

3 Speaking sensibly. 2 Eloquent. 4 Speaking much.

३५ वदो वदावदो वक्ता, वागीशो वाक्पतिः समौ ।
वाचोयुक्तिपटुर् वाग्मी, वावदूको ऽतिवक्तरि ॥

4 Talking non-sense. 3 Foul-mouthed, scurrilous. 2 Speaking civilly.

३६ स्याज् जल्पाकस् तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
दुर्मुखे मुखराऽबद्धमुखौ, शक्तः प्रियंवदे ॥

---

चडि कोपे । (जागरूकः) जागरूकश्च (३।२।१६५/३१४५) इति–ऊकञ्, (जागरिता) चकरात्तन् । प्रचल इवाचरन् प्रचलायितः, य उपविष्टो निद्रया घूर्णितः ॥ ३२ ॥ (स्वप्नक्) स्वपितृषोर्नजिङ् (३।२।१७२/३१५२) । (शयालुः) शीङ्श्चेतिवक्तव्यादालुच् (शीङोवाच्यः) । (निद्रालुः) निद्राति तच्छीलः, निद्रातन्द्रेत्यालुच्, स्पृहिगृहि-पतिदयीति (३।२।१५७/३१३८) । निद्राति स्म निद्राणः, संयोगादेरातो धातो (८।२।४३/३०१७) इति निष्ठा नत्वम् । पराञ्चतीति पराङ् (पराचीनः), विभाषाञ्चेरदिक् स्त्रियाम् (५।४।८/२०८०) इति स्वार्थे खः । संमुखीनस्त्वभिमुखः । अवाञ्चत्यवाङ्, अवाचीनोऽपि ॥ ३३ ॥ (देवद्र्यङ्, इ०) विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६।३।९२/४१८) , विष्वक्सर्वतोऽर्थेऽ-व्ययम् । (सध्र्यङ्) सहस्य सध्रिः (६।३।९५/४२२) इत्यञ्चतौ परे सध्र्यादेशः । (तिर्यङ्) तिरसस्तिर्यलोपे (६।३।९४/४२३) ॥ ३४ ॥ वदति (वदः) वदावदः, चरिचलिपतिवदि-भ्यो द्वित्वमभ्यासस्यात्वं वा (वा० ३४३०/२८९६) । वाचो युक्तौ पटुः, वाग्दिक्पश्य-द्भ्यो युक्तिदण्डहरेषु (वा० ३८९७/९७९) इति षष्ठ्या अलुक् । प्रशस्ता वागस्त्यस्य वाग्मी, वाचोग्मिनिः (५।२।१२४/१९३०) । वावद्यते तच्छीलो वावदूकः, यजजप–(३।२।१६६/३१४६) इत्यत्र वदेरनु[प]देशः कार्य इति पदकारवाक्यादूकः । वक्तरीति, तृन् (३।२।१३५/३११५) । प्रवाक् प्रगल्भः सुमुखश्च ॥ ३५ ॥ (जल्पाकः) जल्पभिक्षेति (३।२।१५५/३१३५) ताच्छील्ये षाकन् । (वाचाल इ०) आलजाटचौ बहुभाषिणि (५।२।१२५/१९३१) । गर्ह्यजापी जञ्जपूकः । मुखेन वाग्लक्ष्यते, निन्दितं मुखमस्त्यस्य मुखरः, रप्रकरणे खमुखकुञ्जेभ्यो रो वक्तव्यः (वा० ३१९८/१९२४) । अबद्धमनियन्त्रितं मुखमस्त्यस्याबद्धमुखः । शक्नोति वक्तुं शक्तः । (प्रियंवदः) प्रियवशे वदः खच्

2 Lisping.
2 Speaking ill.
2 Censorious, detracting.

३७ लोहलः स्यादस्फुटवाग्, गर्ह्यवादी तु कद्वदः ।
समौ कुवाद-कुचरौ, स्यादसौम्यस्वरो ऽस्वरः ॥

2 Having a bad voice.

2 Sonorous.
2 Idiot, stupid.
1 Deaf and dumb.
2 Speaker of a prologue.

३८ रवणः शब्दनो, नान्दीवादी नान्दीकरः समौ ।
जडो ऽज्ञ, एडमूकस् तु वक्तुं श्रोतुम-शिक्षिते ॥

2 Silent.
3 Naked.
2 Expelled.
2 Cursed.

३९ तूष्णींशीलस् तु तूष्णीको, नग्नोऽवासा दिगम्बरे ।
निष्कासितो ऽवकृष्टः स्यादपध्वस्तस् तु धिक्कृतः ॥

2 Humbled : subdued.
2 Condemned ; or adjudged.
4 Removed ; set aside.

४० आत्तगर्वो ऽभिभूतः स्याद्, दापितः साधितः समौ ।
प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः ॥

2 Pale.
2 Deceived, tricked.
4 Disappointed.

४१ निकृतः स्याद् विप्रकृतो, विप्रलब्धस् तु वञ्चितः ।
मनोहतः प्रतिहतः प्रतिबद्धो हतश् च सः ॥

2 Turned away.
3 Confined.
2 Distressed.
2 Put to flight.

४२ अधिक्षिप्तः प्रतिक्षिप्तो, बद्धे कीलित-संयतौ ।
आपन्न आपत्प्राप्तः स्यात्, कान्दिशीको भयद्रुतः ॥

---

(३।२।३२/२९५३) ॥ ३६ ॥ (लोहलः) लुह कत्थनादौ । कुत्सितं वदतीति कद्वदः, रथ-वदयोश्च (६।३।१०२/१०२८) इति कोः कत् । अनुत्तरो यद्वदश्च । कुत्सितो वादोऽस्य कुवादः । कुत्सितं चरति कुचरः, पचाद्यच्, नन्दिग्रहीति (३।१।१२४/२८९६) । विपरीतः स्वरोऽस्य–अस्वरः, नञ् तद्विरुद्धेऽनर्थवत् ॥ ३७ ॥ (रवणः, इ०) रौति शब्दायतीति, चलनशब्दार्थात् (३।२।१४८/३१२८) इति युच् । नान्दीं मङ्गलपाठं करोति नान्दीकरः, दिवाविभेति (३।२।२१/२९३५) टः । (जडः) जल धान्ये (चान्द्रोधातुः), डलयोरेकत्वम् । अज्ञोऽतीक्ष्णधीः । मातृमुखो मातृशासितश्च । तीक्ष्णधीस्तु कुशाग्रीयः । न–एडोऽपि (अ)वर्करोऽपि मूकः–एडमूकसदृशो वा–अनेडमूकः, नञिवयुक्तमन्यसादृशाधिकरणे तथाह्यर्थः (भाष्यव०), एडो हि बधिरः ॥ ३८ ॥ (तूष्णीकः) तूष्णीमः शीले को मलोपश्च वक्तव्यः (वा० ३२८६/२०२८) । ओणजी व्रीडे, नजते स्म नग्नः । अविद्यमानं वासोऽस्य–अवासाः । अवकृष्यते दूरीक्रियते स्माऽवकृष्टः, निःसारित इत्यर्थः ॥३९॥ आत्तो गृहीतो गन्धोऽभिमानोऽस्यात्तगन्धः । चत्वार एकार्था इत्येके । (समौ) दण्डितार्थे । प्रत्यादिश्यते स्म प्रत्यादिष्टः, अनङ्गीकृत इत्यर्थः । अपविद्धोऽपि ॥४०॥ निः-क्रियते खलीक्रियते स्म निकृतः । मनसि हतो मनोहतः । प्रतिबन्धः प्रवृत्तिनिवारणार्थः ॥ ४१ ॥ प्रतिक्षिप्यते न्यक्क्रियते स्म प्रतिक्षिप्तः । (कीलितः) कील बन्धने । प्राप्त आपदं आपत्प्राप्तः, प्राप्तापन्ने च द्वितीययेति (२।२।४/७१५) समासः ।

3 Calumniated. ४३ आक्षारितः क्षारितोऽभिशस्ते, संकसुकोऽस्थिरे ।
2 Unsteady.
2 Afflicted by vice. व्यसनार्तोपरक्तौ द्वौ, विहस्त-व्याकुलौ समौ ॥
2 Confounded, perplexed.

2 Overcome by fear, &c. ४४ विक्लवो विह्वलः, स्यात् तु विवशोऽरिष्टदुष्टधीः ।
2 Apprehensive of death.

2 Deserving a whipping. कश्यः कश्यार्हे, सन्नद्धे त्वाततायी वधोद्यते ॥
1 Murderous; a felon.

2 Hateful, detestable. ४५ द्वेष्ये त्वक्षिगतो, वध्यः शीर्षच्छेद्य इमौ समौ । 2 Meriting beheading.
1 Meriting death by poison. विष्यो विषेण यो वध्यो, मुसल्यो मुसलेन यः ॥
—by knocks of a pestle.

2 Innocent. ४६ शिश्विदानोऽकृष्णकर्मा, चपलश् चिकुरः समौ ।
2 Inconsiderately guilty. दोषैकदृक् पुरोभागी, निकृतस् त्वनृजुः शठः ॥
2 Malevolent and censorious. 3 Wicked; perverse.

---

( कांदिशीकः ) कां दिशं व्रजामीति व्याकुलः, पृषोदरादिः ( $\frac{६।३।१०९}{१०३४}$ )। भयाद् द्रुतः पलायितः ॥ ४२ ॥ आक्षार्यते स्वरूपाच्चाल्यते-आक्षारितः, अलीकोत्पन्नपातकव्यपदेशः । अभिशस्तोऽभिदूषितः, मैथुनं प्रतीत्येके । ( संकसुकः ) समि कस उकन् ( उ० १८७ ), अनिश्चित इत्येके । समावित्येव । व्यस्यति श्रेयोमार्गाद्व्यसनं तेन ऋतो व्यसनार्तः, ऋते च तृतीयासमासे ( वा० $\frac{३६०७}{७३}$ ) इति वृद्धिः । उपरज्यते स्मोपरक्तः । विगतो हस्तो यस्य स विहस्तः, किंकर्तव्यतामूढत्वात् ॥ ४३ ॥ विक्लवते कातरीभवति विक्लवः, क्लविर्धातुगणापरिसमाप्तेर्लौकिकः । विरुद्धं ह्वलति विह्वलः । विरुद्धं वष्टि कामयते विवशः । अरिष्टेन मरणचिह्नेन श्वासादिना दुष्टा धीर्यस्य । कशा चर्मयष्टिस्तद्घातोप्युपचारात्, तामर्हति कश्यः-अश्वादिः, दण्डादित्वाद्यः ( $\frac{५।१।६६}{१७३१}$ )। सन्नद्धः सन् यो वधार्थमुद्यतः स आततः सोद्योगः सन्नेति वधाद्यर्थं धावति अवश्यं, आर्तं पलायमानं तायते वा-आततायी । वध उपलक्षणं यत्स्मृतिः-अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते त्वाततायिनः (?) ॥४४॥ अक्षिगतो यथा किंशारुकादिः खेदकृत् । वधं शीर्षच्छेदं चार्हति । ( विष्यः ) नौवयोधर्मेति ( $\frac{४।४।९१}{१६४३}$ ) यत् । ( मुसल्यः ) मुसलेन वध्य इत्यर्थः ॥ ४५ ॥ ( शिश्विदानः ) श्विदि श्वैत्ये, लिटः कानज्वा ( $\frac{३।२।१०६}{३०९४}$ )। अकृष्णं निष्पापत्वाच्छुक्लं कर्मास्याकृष्णकर्मा । चप्यते चपलः चप सान्त्वने । चिनोति चिकुरः, चकेर्वा रूपं, लक्ष्यं च-तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ( कु. सं. १-४७ )। चलाचले स्यात्तरलश्चापलश्चञ्चलश्चलः । दोष एकस्मिन्नेव दृग्ज्ञानमस्य, यत्कात्यः-दोषैकग्राहिहृदयः पुरोभागीति कथ्यते । पुरोऽग्रे भजते पूर्वं[सूपं] वत्पुरो-

2 Informer.
3 Mischiefmaker.
4 Destructive, mischievous.

४७ कर्णेजपः सूचकः स्यात्, पिशुनो दुर्जनः खलः ।
नृशंसो घातुकः क्रूरः पापो, धूर्तस् तु वञ्चकः ॥

2 Fraudulent ; crafty.

6 Idiot.
5 Miser ; avaricious.

४८ अज्ञे मूढ-यथाजात-मूर्ख-वैधेय-बालिशाः ।
कदर्ये कृपण-क्षुद्र-किम्पचान-मितम्पचाः ॥

5 Poor; indigent.
5 Beggar ; mendicant.

४९ निःस्वस् तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।
वनीयको याचनको मार्गणो याचकाऽर्थिनौ ॥

2 Proud.
2 Happy.
1 Of divine origin.
1 Viviparous.

५० अहङ्कारवानहंयुः, शुभंयुस् तु शुभान्वितः ।
दिव्योपपादुका देवा, नृ-गवाऽऽद्या जरायुजाः ॥

---

भागी । निकृणोति हिनस्ति स्म निकृतः । ( शठः ) शठ कैतवे ॥ ४६ ॥ कर्णे जपति सूचयति कर्णेजपः, स्तम्बकर्णयोरमि जपोः (३।२।१३/२९२७) इत्यच् । पेशयत्येकदेशेन सूचयति पिशुनः, पिश अवयवे, अपिश्यति खण्डयतीति श्रीभोजः । दुष्टो जनः, दुष्टं जनयति वा दुर्जनः । खं शून्यं लाति खलः, खलति चलति वा । नृन्शंसति नृशंसः । हन्ति तच्छीलो घातुकः, लषपतपदेति (३।२।१५४/३१३४) उकञ् । कुडः गतिकौटिल्ये (अस्मात्) क्रूरः, कृणाति वा । पिबति धर्मं पापः, पापं वास्त्यस्य । धूर्तते ( धुर्वति स्म ) धूर्तः ॥ ४७ ॥ मुह्यति मूढः । यथैव जातस्तथैव स्थितोऽसंस्कृतत्वाद्यथाजातः । मुह्यति मूर्खः, मुहेःखो मूर्च ( उ० ७०० ) । विधाया भोजनस्यापत्यमिव वैधेयः, विधेयात्स्वार्थेऽण् वा । बाल्यते बालिशः, बाडृ आप्लाव्ये, बडिशाच्छेषेऽण् वा । मातृशासितश्च । यद्भविष्यो दैवपरः । कुत्सितोऽर्यः स्वामी कदर्यः । कल्पते कृपणः । क्षुद्यतेऽल्पत्वात्क्षुद्रः । किंचित्पचति किंपचानः, औणादिक आनच् । मितं पचति मितंपचः, मितनखे च (३।२।३४/२९४९) इति पचः खच् । कीनाशोऽपि ॥ ४८ ॥ दुष्टा विधा प्रकारो भोजनं वास्य दुर्विधः । दीयते दीनः, दीङ् क्षये, स्वादय ओदितः (८।२।४५/३०१९) । दुःस्थः कीकटश्च । ( वनीयकः ) वनु याचने । याचते याचनः, युच् कन् । मार्गति मार्गणः । अर्थयते तच्छीलोऽर्थी, अर्थाच्चासंनिहित इति (५।४।१००/८०२) इनिर्वा । तर्कु [ र्क ] कश्च ॥ ४९ ॥ अहमिति विभक्तिप्रतिरूपको निपातः, अहमस्त्यस्य—अहंयुः, अहंशुभमोर्युस् (५।२।१४०/१९४६), निपातनान्मान्तत्वम् । दिवि भवा दिव्या उपपा [ प ]द्यन्ते दिव्योपपादुकाः, द्युप्रागपागिति (४।२।१०१/१३२१) यत्, लषपतपदेत्युकञ् (३।२।१५४/३१३४) । अदृष्टसंहतेभ्यः परमाणुभ्यो जायन्ते सद्य इत्यर्थः । अयोनिजत्वार्थं पुनरिहोक्ताः । नरो

1 Engendered by damp.	५१ स्वेदजाः कृमि-दंशाऽऽद्याः, पक्षि-सर्पाऽऽदयोऽण्डजाः ।
1 Oviparous.

इति प्राणि-वर्गः, अत्र मूल श्लोकाः ५०॥; क्षे. श्लो. ०

---

1 Vegetables.	उद्भिदस् तरु-गुल्माऽऽ द्या, उद्भिदुद्भिज्जमुद्भिदम् ।
3 Sprouting ; germinating.

17 Beautiful or pleasing.	५२ सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् ।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥
'रम्यं मनोहरं सौम्यं भद्रकं रामणीयकम् ।' । १ ।

1 Charming.	५३ तदासेचनकं तृप्तेर् नास्त्यन्तो यस्य दर्शनात् ।

6 Beloved, desired.	अभीष्टे ऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥

13 Inferior ; low.	५४ निकृष्ट-प्रतिकृष्टाऽर्व-रेफ-याप्याऽवमाऽधमाः ।
कुपूय-कुत्सिताऽवद्य-खेट-गर्ह्याऽणकाः समाः ॥

---

गोमहिष्याद्याश्च जरायुजाः, जरायुर्गर्भशय्या ॥ ५० ॥ आद्यशब्दान्मशकयूकाद्याः । आदिशब्दः प्रकारे व्यवस्थायां वा पिपीलिकाद्यर्थः । आद्यशब्दात्तृणाद्याः । उद्भिनत्ति भुवमुद्भित्–उद्भिदं च, क्विप्, कश्च । उद्भेदनमुद्भित्ततो जायत इत्युद्भिज्जं, डः । इत्थमयोनिजजरायुजस्वेदजाण्डजोद्भिज्जत्वेन पञ्चधा भूतसर्गः । एषामेवा (वा)न्तरभेदा-च्चतुर्दशविधत्वं, यदाहुः–अष्टविकल्पो दैवस्तिर्यग्योनिश्च पञ्चधा भवति । मानुष्य एकविधः स समासाद् भौतिकः सर्गः ॥ पैशाचो राक्षसो याक्षो गान्धर्वः शाक्र एव च । सौम्यश्च प्राजापत्यश्च ब्राह्मोऽष्टौ देवयोनयः (?) ॥५१॥ सुन्दरं सुष्ठु नन्दयतीति नैरुक्ताः । रोचते रुचिरं, रुचिं राति वा । चरति मनोऽस्मिंश्चारु । सुष्ठु समं शोभना समाऽत्रेति वा सुषमं, लक्षणया चारु । साध्नोति साधु । शोभते शोभनं, युच् । काम्यते कान्तम् । रोचते रुच्यं, राजसूयसूर्यमृषोद्यरुच्येति ($\frac{३।१।११४}{२८६५}$) कर्तरि साधुः । जानातीति ज्ञं, इगुपधज्ञेति ($\frac{३।१।१३५}{२८९७}$) कः, मन एव ज्ञं यत्र तन्मनोज्ञम् । सर्वैर्मन्यते मञ्जु, धर्मि । ( मञ्जुलं ) धर्ममात्रवृत्त्या तु मत्वर्थीयो लः श्यामलपिङ्गलादिवत् । हारि वल्गु मनोहारि च ॥ ५२ ॥ आसिच्यत आप्याय्यते दृगनेन–आसेचनकं, यस्य दर्शनाद् दृग् न तृप्यति । आभिमुख्येनेष्यतेऽभीष्टम् । अभ्याप्तुमिष्टमभीप्सितम् । हृदयस्य प्रियं हृद्यं, हृदयस्य प्रिय इति ($\frac{४।४।९५}{१६४७}$) यत्, हृदयस्य हृल्लेखेति ($\frac{६।३।५०}{९८८}$) हृत् । दयते चित्तमादत्ते दयितम् । ( वल्लभं ) वल्लेति सौत्रः प्रीत्यर्थः । प्रीणाति प्रियं, कः ॥५३॥ निकृष्यते निकृष्टः । एवं प्रतिकृष्टः । अर्वत्यर्वा । रिफति हिनस्ति रेफः । यापिता गुणा अस्माद्याप्यः, जपादित्वाद्वत्वे ($\frac{७।४।८६}{२६३८}$) याव्योऽपि । अधोभवोऽवमः । अधोभवोऽधमः, अवोधसोर्लोपश्च ( $\frac{६।४।२९}{३१८७}$ ) इति मः सलोपश्च । कुत्सितं पूयते कुपूयः । नोद्यते-

| | |
|---|---|
| 4 Foul, dirty. | ५५ मलीमसं तु मलिनं कच्चरं मलदूषितम् । |
| 3 Purified. 2 Clean. | पूतं पवित्रं मेध्यं च, वीध्रं तु विमलाऽर्थकम् ॥ |
| 5 Cleansed. | ५६ निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम् । |
| 2 Pithless. 4 Void, empty. | असारं फल्गु, शून्यं तु वशिकं तुच्छ-रिक्तके ॥ |
| 17 Chief; principal. | ५७ क्लीबे प्रधानं प्रमुख-प्रवेकाऽनुत्तमोत्तमाः । |
| | मुख्य-वर्य-वरेण्याश् च प्रवर्हो ऽनवराध्र्य-वत् ॥ |
| | ५८ पराध्र्याऽग्र-प्राग्रहर-प्राग्र्याऽग्र्याऽग्रीयमग्रियम् । |
| 5 Excellent. | श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश् चाऽतिशोभने ॥ |
| 7 Pre-eminent (in comp). | ५९ स्युरुत्तर-पदे व्याघ्र-पुङ्गव-र्षभ-कुञ्जराः । |
| | सिंह-शार्दूल-नागाऽऽद्याः पुंसि श्रेष्ठाऽर्थ-गोचराः । |

---

वद्यः, अवद्यपण्यवर्या गर्ह्येति ( ३।१।१०१ / २८४९ ) साधुः । खेटति त्रस्यतीति खेटः, खिट उत्त्रासने । अणति रटतीत्यणकः, अचू कुत्सायां कन् ( कुत्सिते ) । कद्वरोऽपि ॥ ५४ ॥ ( मलिनं, मलीमसं ) मलोऽस्त्यस्येति, ज्योत्स्नातमिस्रेति ( ५।२।११४ / १९२१ ) साधुः । कुत्सितं चरति कच्चरम् । म्लानं कल्मषं च । पुनाति पूतम् । पूयतेऽनेनेति पवित्रम् । मेधनीयं मेध्यं, मेधायां साधु वा । विशेषेणेन्द्धे वीध्रं, रक् ॥ ५५ ॥ ( निर्णिक्तं ) णिजिर् शौचे । ( मृष्टं ) मृज् ( ष् ) शुद्धौ । निष्क्रान्तं शोध्यान्निःशोध्यम् । अविद्यमानोऽवस्करो वर्चस्कोऽस्यानवस्करम् । फलति विशीर्यते फल्गु, ञिफला विशरणे । शुने हितं शून्यं शुन्यं च, उगवादिभ्यो यत् ( ५।१।२ / १६६२ ) इत्यत्र शुनःसंप्रसारणं वा च दीर्घत्वम् ( ग० ९६ ) । उश्यते काम्यतेऽनावृतत्वाद्वशिकम् । तुद्यते स्म तुच्छम् । रिच्यते रिक्तं, रिच वियोजने ॥ ५६ ॥ प्रधीयते प्रधानम् । प्रकृष्टं मुखमस्य प्रमुखः । प्रकृष्टो वेकः पृथक्त्वमस्य प्रवेकः । नास्त्युत्तमोऽस्मादनुत्तमः । अतिशयेनोद्गत उत्तमः । मुखमिव मुख्यः, शाखादिभ्यो यः ( ५।३।१०३ / २०७८ ) । वरणीयो वर्यः । व्रियते वरेण्यः, वृञ एण्यः ( उ० ३७८ ) । प्रकृष्टो वर्हः परिच्छदोऽस्य ( प्रवर्हः ), वृह वृद्धौ वर्ह प्राधान्ये वा, प्रवृहत्युद्यच्छते वा प्रबर्हः, बृह उद्यमे । अनवरार्धे मुख्ये भागे भवोऽनवराध्र्यः ॥ ५७ ॥ परार्धे भवः पराध्र्यः, परावराधमोत्तमपूर्वाच्चेति ( ४।३।५ / १३७७ ) यत् । अगति न गच्छति वा—अग्रं [ ग्रः ] । प्रकृष्टमग्रं हरति प्राग्रहरः । प्राग्रे भवः प्राग्र्यः । ( अग्र्यः, इ० ) अग्राद्यत् ( ४।४।११६ / ३४६२ ), घच्छौ च ( ४।४।११७ / ३४६३ ) । अग्रणीर्ग्रामणीः शालीवरश्च । ( श्रेयान्, इ० ) अतिशयेन प्रशस्यः, इष्ठन्नीयसुनौ, प्रशस्यस्य श्रः ( ५।३।६० / २००९ ) । पुष्यति पुष्कलः । अतिशयेन सन् सत्तमः ॥ ५८ ॥ पुरुषो व्याघ्र इव शूरः पुरुषव्याघ्रः, गोनागः । आद्यशब्दान्मुखचन्द्रपादपद्माद्याः, उपमितं व्याघ्रादिभिः ( २।१।५६ / ७३२ ) इति समासः । श्रेष्ठस्यार्थो

3 Secondary, subordinate. ६० अप्राग्र्यं द्वय-हीने द्वे अप्रधानोपसर्जने ।
9 Great. विशंकटं पृथु बृहद् विशालं पृथुलं महत् ॥

4 Fat; large. ६१ वड्रोरु-विपुलं, पीन-पीव्नी तु स्थूल-पीवरे ।
11 Little, small. स्तोकाऽल्प-क्षुल्लकाः, सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥

६२ स्त्रियां मात्रा त्रुटिः पुंसि लव-लेश-कणाऽणवः ।
5 Very small. अत्यल्पे ऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ॥

12 Much, many. ६३ प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश् च भूरि च ॥

1 Countless. ६४ परःशताऽऽद्यास् ते येषां परा संख्या शताऽऽदिकात् ॥

---

गोचरो विषय एषाम् ॥ ५९ ॥ उपसृज्यते नियुज्यत उपसर्जनं, आविष्टलिङ्गत्वात्क्लीबे, यथा—उपसर्जनं भार्या । अप्राग्र्यस्तु वाच्यलिङ्गः । उपाग्रं च । विशी (स्ती)-र्यते विशंकटः, वेःशालच्शंङ्कटचौ (५।२।२८/१८२९)। प्रथते पृथुः । गुणमात्रवृत्तेर्लः (पृथुलः)। बृंहते (बर्हति) बृहत् । महति महत्, वर्तमाने पृषद्बृहन्महदिति (उ० २४१) निपात्यते ॥ ६० ॥ वलते वड्रम् । अवते—उरु, उङ् शब्दे । विपोलति विपुलं, पुल महत्त्वे, कि: । विकटं च । प्यायते पीनः, क्तः, प्यायःपी (६।१।२८/३०७२), ओदितश्च (८।२।४५/३०१९) इति निष्ठा नत्वम् । (पीवन्, पीवरं) क्वनिप् क्वरप् च । (स्थूलं) स्थूल परिबृंहणे । घनो बहलश्च । स्तौति स्तोकम् । अल्यते—अल्पम् । क्षुद्यते क्षुल्लः । सुष्ठु—उक्ष्यत आप्याय्यते सूक्ष्मम् । दभ्यते दभ्रम् । (कृशं) कृश तनूकरणे । तन्यते तनु ॥ ६१ ॥ मीयतेऽल्पत्वान्मात्रा । त्रुटति त्रुटिः । लूयते लवः । लिश अल्पीभावे, लिश्यते लेशः । कणति निमीलति कणः । अणत्यणुः । अतिशयेनाल्पं (अल्पीय इ०), इष्ठन्नीयसुनौ । (कनीयः) युवाल्पयोःकनन्यतरस्याम् (५।३।६४/२०१९)। अतिशयेनाणु—अणीयः, तुरिष्ठेमेयस्सु (६।४।१५४/२००८), टेः (६।४।४३/३१६) इति टेलोंपः ॥ ६२ ॥ प्रभवति प्रभूतम् । प्रचीयते प्रचोर्यते वा प्रचुरम् । प्राज्यते प्राज्यं, प्रकर्षेऽऽ-णाजी (वी) यते वा । न दभ्रमदभ्रम् । बंहते बहु । (बहुलं) प्रागान्मत्वर्थीयो लः । पूर्वते पुरु । पुर्विति हूयते पुरुहु । अतिशयेन बहु भूयिष्ठं, बहोर्लोपो भू च बहोः (६।४।१५८/२०१७), इष्ठस्य यिट् च (६।४।१५९/२०१८) इति भूरादेशो यिडागमश्च । स्फायते स्फिरम् । भवति भूरि ॥ ६३ ॥ शतात्परं परःशतं (परःशता अपि), यत्—ब्रह्मर्षयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि (उ० रा० १. १५), पारस्करादित्वात्-सुट् । श्रीभोजस्तु परःशब्दं निपातं मन्यते, यथा परोवरः, परोक्षम् ॥ ६४ ॥(गणेयं)

2 Numerable.
2 Numbered, counted.
14 All ; entire.
3 Coarse.
3 Delicate, fine.
15 Near, proximate.
3 Adjoining, contiguous.
2 Very near.
3 Distant.
3 Very remote.
2 Long.

६५ गणनीये तु गणेयं, संख्याते गणितमथ समं सर्वम् ।
विश्वमशेषं कृत्स्नं समस्त-निखिलाऽखिलानि निःशेषम् ।

६६ समग्रं सकलं पूर्णमखण्डं स्यादनूनके ।
घनं निरन्तरं सान्द्रं, पेलवं विरलं तनु ॥

६७ समीपे निकटाऽऽसन्न-संनिकृष्ट-सनीड- वत् ।
सदेशाऽभ्याश-सविध-समर्याद-सवेश-वत् ॥

६८ उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम् ।
संसक्ते त्वव्यवहितमपदान्तरमित्यपि ॥

६९ नेदिष्ठमन्तिकतमं, स्याद् दूरं विप्रकृष्टकम् ।
दवीयश् च दविष्ठं च सुदूरं, दीर्घमायतम् ॥

---

उणादौ गणेरेयः । (गणितं) कर्मणि क्तः । समति समं सर्वार्थे सर्वनाम, यथा—सूर्यः समेषां समः (स. कं. १।११२) । सर्वति सरति वा सर्वम् । वेवेष्टि विश्वम् । नास्ति शेषमस्याशेषम् । कृती वेष्टने, कृत्यते व्याप्यतेऽनेन कृत्स्नम् । समस्यते—एकीक्रियते समस्तम् । निवृत्तं खिलाच्छून्यान्निखिलम् । नास्ति खिलमस्याखिलम् । निष्क्रान्तं शेषान्निःशेषम् ॥ ६५ ॥ संगतमग्रमस्य समग्रं, समं ग्रसते वा । सह कलाभिर्भागैर्वर्तते सकलम् । न खण्डं भिन्नमखण्डम् । पिपर्ति पूर्वति वा पूर्वम् । पूर्णमित्येके । आदिशब्दादभिन्नादि । नास्त्यूनमस्यानूनम् । ( घनं ) मूर्तौ घनः ( $\frac{३।३।७७}{३२५४}$ ) इति साधुः । निर्गतमन्तरं व्यवधानमस्य निरन्तरम् । सहान्द्यते बध्यते सान्द्रम् । निबिडं निविरीशं ( सं ) गाढं [ निरन्तरे ] च । पेल्यते क्षिप्यते पेलवम् । विरात्यन्तरं विरलम् । तन्यते तनु । शिथिलं श्लथं च ॥ ६६ ॥ संभूता आपोऽत्रेत्युपचारात्समीपं, द्व्यन्तरुपसर्गेभ्योऽप ईत् ( $\frac{६।३।९७}{९४६}$ ) । निबध्नाति निकटं, संप्रोदश्चेति ( $\frac{५।२।२९}{१८३०}$ ) कटच् । आसीदति स्मासन्नः । संनिकृष्यते स्म संनिकृष्टः । समानं नीडमस्य सनीडं, सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ( $\frac{६।२।२३}{३७५७}$ ) इति सामीप्यं लक्षणयाऽत्र । समानो देशोऽस्य सदेशः । अभ्यस्यतेऽवाप्यतेऽभ्यासः । (सविध इ०) समाना विधा मर्यादा वेशश्चास्य ॥ ६७ ॥ कण्ठस्य समीपमुपकण्ठम् । अन्तोऽस्यास्तीत्यन्तिकः । अभ्यर्द्यतेऽभ्यर्णः, अभेश्चाविदूर्ये ( $\frac{७।२।२५}{३०६५}$ ) इतीडभावः । अभिमुखमग्रमस्याभ्यग्रम् । अमित इति निपातः, अभेस्तसिर्वा । नास्ति पटेन तिरस्करिण्यान्तरं व्यवधानात्रापटान्तरम् ॥ ६८ ॥ अतिशयेनान्तिकं नेदिष्ठं, नेदीयोऽपि, अन्तिकबाढयोर्नेदसाधौ ( $\frac{५।३।६३}{२०१४}$ ) । दूयतेऽत्र दूरम् । अतिशयेन दूरं दवीयः, स्थूलदूरेति ( $\frac{६।४।१५६}{२०१५}$ ) यणादि परं लुप्यते पूर्वस्य च गुणः । दृणाति दीर्घम् । आयम्यते आयतं, आयतते वा

3 Round.
2 Uneven. wavy.
७० वर्तुलं निस्तलं वृत्तं, बन्धुरं तून्नतानतम् ।
6 High, tall.
उच्च-प्रांशून्नतोदग्रोच्छ्रितास् तुङ्गे, ऽथ वामने ॥ 5 Short.
3 Bending, stooping.
७१ न्यङ्-नीच-खर्व-ह्रस्वाः स्युरवाग्रेऽवनताऽऽनतम् ।
11 Crooked.
अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम् ॥
७२ आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ।
3 Straight.
3 Confounded.
ऋजावजिह्म-प्रगुणौ, व्यस्ते त्वप्रगुणाऽऽकुलौ ॥
5 Eternal.
७३ शाश्वतस् तु ध्रुवो नित्य-सदातन-सनातनाः ।
3 Permanent, firm.
स्थास्नुः स्थिरतरः स्थेयानेक-रूप-तया तु यः ॥
1 Uniform; perpetually the same.
७४ काल-व्यापी स कूटस्थः, स्थावरो जङ्गमेतरः । 2 Immoveable.
6 Moveable.
चरिष्णु जङ्गम-चरं त्रसमिङ्गं चराचरम् ॥

---

॥ ६९ ॥ वर्तते भ्रमति वर्तुलम् । निर्गतं तलं प्रतिष्ठाऽस्य निस्तलं, भूमौ नास्ते तत्र वा रजो न तिष्ठति । बध्नाति गतिं बन्धुरम् । ( उन्नतानतं ) उन्नतं सदुपाधिवशादीषन्नतं, यथा—कण्ठस्य तस्याः स्तनबन्धुरस्य ( कु० सं० १।४२ ) । उच्चीयत उच्चम्, डः, उदश्चो वा, आजपराचादिवत्-मयूरव्यंसकादिर्वा ( २।१।७२/७५४ ) । प्राश्नुते प्रांशु । उन्नमति स्मोन्नतम् । ऊर्ध्वमग्रमस्योदग्रम् । ऊर्ध्वं श्रयति स्मोच्छ्रितम् । तुञ्जत्यादत्ते तुङ्गम् । उत्तुङ्गमुध्दुरं च । वमति वामोऽस्त्यस्य वा वामनः ॥ ७० ॥ नियतमञ्चति न्यक् । निम्नं चीयते नीचं, नीचैर्विद्यतेऽस्य वा । खर्वति खर्वः । ह्रसति ह्रस्वः । अवनतमग्रमस्यावाग्रं, अधोमुखमित्यर्थः । अवनमति स्मावनतम् । आनमति स्मानतम् इयर्ति– अराः सन्ति वाऽस्य– अरालम् । वर्ज्यते वृजिनम । जी ( ही ) यते जहाति वा जिह्मम् । ( उर्मिमत् ) ऊर्मयो भङ्गाः सन्त्यस्य । ( कुञ्चितं ) कुञ्च गतिवैकल्ये । नमति स्म नतम् ॥ ७१ ॥ आविध्यत आविद्धम् । भुजो कौटिल्ये, भुग्नम् । वेल्लति वेल्लितम् । वञ्चति वक्रं रक् । भङ्गुरं च । इयर्ति ऋज्यते वा ऋजुः । प्रकृष्टो गुणोऽस्य सदृशो गुणेन सौर्व्या वा प्रगुणः । व्यस्यते विपर्यस्यते स्म व्यस्तम् । आकोलत्येकीभवति– आकुलम् ॥ ७२ ॥ शश्वद्भवः शाश्वतः, अव्ययानां भमात्रे टिलोपः ( वा० ४१८७/१३२४ ), आराच्छश्वतोर्नेष्यते ( इ० ) । शाश्वतिकोऽपि । ध्रुव, ध्रुव स्थैर्ये । नियतं भवं नित्यं, त्यब्नेर्ध्रुवे ( वा० २७८०/१३२४ ) इति त्यप् । ( सदातन इ० ) सदाभवः सनाभवश्चेति, सायं चिरमिति ( ४।३।२३/१३११ ) ट्युट् तुट् च । तिष्ठति तच्छीलः स्थास्नुः, ग्लाजिस्थश्च ग्स्नुः ( ३।२।१७५/३११९ ) । अतिशयेन स्थिरः स्थेयान्, प्रियस्थिरेति ( ६।४।१५७/२०१६ ) स्थादेशः ॥ ७३ ॥ एकरूपो निर्विकारः । निरवधिं कालं व्याप्नोति स्थिरत्वात् ( कालव्यापी ) । कूटेनाचलत्वेन तिष्ठति कूटस्थः, आत्माकाशादिः । तिष्ठति तच्छीलः स्थावरः शैलादिः, स्थेशभासेति ( ३।२।१७५/३११९ )

| | | | |
|---|---|---|---|
| 3 Shaking. moving. | ७५ | चलनं कम्पनं कम्प्रं, चलं लोलं चलाचलम् । | |
| 7 Fickle. | | चञ्चलं तरलं चैव पारिप्लव-परिप्लवे ॥ | |
| 2 Exceeding.<br>2 Strong knit. | ७६ | अतिरिक्तः समधिको, दृढसंधिस् तु संहतः । | |
| 9 Hard; solid. | | खक्खटं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ॥ | |
| 2 Material, corporeal. | ७७ | जरठं मूर्तिमन् मूर्तं, प्रवृद्धं प्रौढमेधितम् । | 3 Full-grown. |
| 5 Old, ancient. | | पुराणे प्रतन-प्रत्न-पुरातन-चिरन्तनाः ॥ | |
| 7 New. | ७८ | प्रत्यग्रो ऽभिनवो नव्यो नवीनो नूतनो नवः । | |
| 4 Soft. | | नूत्नश् च, सुकुमारं तु कोमलं मृदुलं मृदु ॥ | |
| 4 Following. | ७९ | अन्वगन्वक्षमनुगे ऽनुपदं क्लीबमव्ययम् । | |
| 2 Perceptible.<br>2 Imperceptible | | प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम् ॥ | |

---

वरच् । जङ्गमात्प्राणिनोऽन्यः (जङ्गमेतरः)। (चरिष्णुः) चरेस्ताच्छील्ये-इष्णुच् । भृशं गच्छति जङ्गमः, अकौटिल्येऽप्यभिधानाद्यङ् (ज्ञा० (?))। (चरं) (चरेरचि) चरिचलिपतीति (वा० ३४३०/२८९६) वा द्विर्भाव आगागमश्च। त्रस्यति चलत्वात्त्रसम्। इङ्गतीङ्गं, इगि गत्यर्थः ॥ ७४ ॥ चलति तच्छीलश्चलन, चलन-शब्दार्थाद्युच् (३।२।१४८/३१२८)। (कम्पनः) कम्पते तच्छीलः, युच्। (कम्प्रः) नमिकम्पीति (३।२।१६७/३१४७) रश्च। लुड विलोडनेऽस्माल्लोलम्। (चलाचलं) चरिचलीति (वा० ३४३०/२८९६) द्वित्वमागागमश्च ॥ ७५ ॥ अतिरिच्यतेऽतिरिक्तः। सम्यगध्युपरिभवः समधिकः। संहन्यते स्म संहतोऽच्छिद्रः। सक्ख हसने, कक्खटमित्येके। (कठिनं, कठोरं) कठ कृच्छ्रजीवनेऽस्मादिनच्-ओरंश्चौरणादिकौ। कृणाति क्रूरम्। नियतं तिष्ठति निष्ठुरम्। (दृढं) दृह वृद्धौ, क्ते, दृढो बलवति साधुः। दृढःस्थूलबलयोः (७।२।२०/३०६०) ॥ ७६ ॥ जीर्यति जठरम्। मूर्च्छति मूर्तम्। नवैकार्था इत्येके। प्रोह्यते स्म प्रौढम्, प्रादूहोढोढिश्चिति (वा० ३६०५/७३) वृद्धिः। (एधितं) एध वृद्धौ। पुरापि नवं (भवं) पुराणम्, नश्चपुराणे (वा० ३३२८/२९९३)। (प्रतनं इ०) पुरात्- त्नतनौ प्रादेशश्च भवार्थे (नश्चपुराणे प्रात्)। पुराभवं चिरंभवं, सायंचिरमिति (४।३।२३/१३९१) ट्युट् तुट् च, निर्देशान्मान्तत्वम् ॥७७॥ प्रतिनवमग्रमस्य प्रत्यग्रः। अभीनूयतेऽभिनवं, णु स्तुतौ। नव एव नव्यः। (नवीन इ०) नवस्यनूभावे त्नप् तनप् खाश्च प्रत्ययाः (वा० ३३२७/२०९३) यच्च। सद्यस्कश्च। सुष्टु कुत्सितं म्रियते म्लायति वा सुकुमारं, कुमार क्रीडायामित्यस्माद्वा। मृद्यते मृदु। (मृदुलं) गुणमात्रवृत्तित्वे लच् ॥ ७८ ॥ अन्वञ्चत्यन्वक्- कान्तोऽव्ययत्वात्प्रागादिवत् अक्षस्य पश्चादन्वक्षम्, अक्षेण रथो लक्ष्यते। पदस्य क्रमस्य पश्चापदनुपदं, पश्चादर्थेऽव्ययीभावः। अनुगच्छत्यनुगं, डः। तत्रैतत्त्रयं (अन्वक्, अन्वक्षं, अनुपदं च) अव्ययं वर्तते, क्लीबत्वं तु द्वयोः (अन्वक्षं)

7 Closely attentive. ८० एकतानो ऽनन्यवृत्तिरैकाग्र्यैकायनावपि ।
अप्येकसर्ग एकाग्र्यो ऽप्येकायनगतोऽपि सः ॥

5 Prior; first; initial.
6 Last, ultimate.
८१ पुंस्यादिः पूर्व-पौरस्त्य-प्रथमाऽऽद्या, अथाऽस्त्रियाम् ।
अन्तो जघन्यं चरममन्त्य-पाश्चात्य-पश्चिमाः ॥

2 Vain, useless.
4 Apparent, evident.
2 Common.
3 Alone, solitary.
८२ मोघं निरर्थकं, स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ।
साधारणं तु सामान्यमेकाकी त्वेक एककः ॥

6 Other, different.
2 Various.
2 Quick, expeditious.
८३ भिन्नाऽर्थका अन्यतर एकस् त्वो ऽन्येतरावपि ।
उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ॥

---

अनुपदं च )। अक्षिणी प्रतिगतं प्रत्यक्षं अत्यादयःक्रान्ताद्यर्थे द्वितीयया (वा०-१३३६/७८०) इति समासः। इन्द्रियेषु भवमैन्द्रियकम् । अक्षेष्वधिकृतमध्यक्षं,तदतिक्रान्तमत्यध्यक्षम् ॥७९॥ एकं तननमविच्छिन्नो विस्तारोऽस्यैकतानः । अनन्यैकरूपा वृत्तिर्व्यापारोऽस्यानन्यवृत्तिः । एकमग्रं पुरोगतं ज्ञेयमस्यैकाग्रः,स्वार्थेऽण् वा । एकमयनं गतिरस्यैकायनः । एकः सर्गो निश्चयोऽस्यैकसर्गः । एकमयनं गतः ( एकायनगतः ) ॥ ८० ॥ आदीयते प्रथममित्यादिः, धर्मिवृत्तित्वेऽप्यजहल्लिङ्गं, यथा– आदिर्गर्गकुलम् । धर्मवृत्तित्वे भवे यत्, आद्यो वाच्यलिङ्गः– अन्त्यवत् । पूर्वति पूर्वः । पुरो भवः पौरस्त्यः 'दक्षिणापश्चात्पुरसस्त्यक् ( ४।२।९८/१३१८ )। प्रथते प्रथमः । आदिमोऽग्रिमश्च । अमत्यन्तः, धर्म-( र्मि ) वृत्तित्वेऽप्यस्त्रीलिङ्गः, यथा– कुलस्यान्तः प्रभु स्त्रियः ( ? )। जघने भवो जघन्यः, दिगादिभ्यो यत् (४।३।५४/१४२९)। चरति चरमः । पश्चाद्भवः पाश्चात्यः–पश्चिमः, दक्षिणापश्चात्पुरसस्त्यक् ( ४।२।९८/१३१८ ), अग्रादिपश्चाड्डिमच् (४।४।२१६/३४६२)। अन्तिमोऽपि ॥ ८१ ॥ मुह्यन्त्यस्मिन्मोघः, न्यङ्क्वादित्वात् ( ७।३।५३/२८६४ ) कुत्वम् । ( स्पष्टं ) स्पश बाधनस्पर्शनयोः । स्फुटति बहिः प्रकाशते स्फुटम् । प्रकृष्टं व्यज्यते स्म प्रव्यक्तम् । उद्बणत्युल्वणं, पृषोदरादित्वात् ( ६।३।१०९/१०३४ ) पक्षे लः । एतौ पूर्वत्र संबध्नंति । उद्धतमुत्कटमुद्रिक्त च । समानमाधारणमस्य साधारणम् । समानं मानमस्य सामान्यं, भावे ( स्वार्थे ) ष्यञ् । (एकाकी, इ०) एकादाकिनिश्चासहाये (५।३।५२/१९९८), चात्कन्–लुकौ च ॥ ८२ ॥ भिन्न इत्यर्थे । त्वोऽन्यार्थः सर्वनाम, यथा– उत त्वः पश्यन्न ददर्श वाचं [ च्यं ] ( ऋ. वे. १०–७१–४० )। ऐष्येकः, यथा–इत्येके मन्यन्ते, ( कौ. सू. २१७ )यत्कात्य :– प्रधानान्यासहायेषु संख्यायां चैक ईष्यते । अनित्यन्यः, अघ्न्यादि ( उ० ५५१ )। ( अन्यतरः ) तरप्स्वार्थे–अल्पाच्तरवत् ( २।२।३४/९०५ )। एति– इतरः । उदक्चावाक्चोच्चावचं, उन्नतं चावनतं च वा, मयूरव्यंसकादिः ( २।१।७२/७५४ )। नैकशब्दः सुप्सुपेति ( २।४।७१/६५० ) समासात्, नानाप्रकारमित्यर्थः । उच्चण्डते– उच्चण्डम् । अवलम्बतेऽवलम्बित [ म्बन ] म् । अत एव उच्चण्डं जानु-

2 Sharp, corrosive.
2 Unobstucted.
4 Contrary.

८४ अरुन्तुदस् तु मर्मस्पृगबाधं तु निरर्गलम् ।
प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ॥

1 Left.
1 Right,
2 Narrow.
2 Impervious.

८५ वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् ।
संकटं ना तु संबाधः, कलिलं गहनं समे ॥

3 Crowded, confused.
3 Strung; tied.
3 Spread; diffuse.
2 Shaved.

८६ संकीर्णे संकुलाऽऽकीर्णे, मुण्डितं परिवापितम् ।
ग्रन्थितं संदितं दृब्धं, विसृतं विस्तृतं ततम् ॥

2 Forgotten.
2 Placed.
6 Shaken.

८७ अन्तर्गतं विस्मृतं स्यात्, प्राप्त-प्राणिहिते समे ।
वेल्लित-प्रेङ्खिताऽऽधूत-चलिताऽऽकम्पिता धुते ॥

7 Thrown, cast, sent.
2 Intrenched.
2 Stolen.

८८ नुत्त-नुन्नाऽस्त-निष्ठ्यूताऽऽविद्ध-क्षिप्तेरिताः समाः ॥
परिक्षिप्तं तु निवृत्तं, मूषितं मुषिताऽर्थकम् ॥

---

लम्बि चेति पेठुः । केचित्त्वविलम्बितमित्याशुकार्यमाहुः, उच्चण्डमुत्तालमिति हि सभ्याः ॥ ८३ ॥ अरूंषि तुदत्यरुंतुदं, विध्वरुषोस्तुदः (३।२।३५ / २९५०) इति खच्- (मर्मस्पृक्) स्पृश उपतापे, मर्मव्यथकमित्यर्थः । निष्क्रान्तमर्गलाया निरर्गलमानयन्त्रणम् । उद्दाममुच्छृङ्खलं च । (प्रसव्यं, अपसव्यं) प्रगतं– अपगतं सव्याद्वामादित्यर्थः, सव्यशब्दो हि– आराच्छब्दवद्वामदक्षिणार्थः । प्रतीपं कूलात्प्रतिकूलं, लक्षणया विरुद्धार्थं प्रतिलोमवत् । अपतिष्ठत्यपष्ठु, कुः, सुषामादित्वात् (८।३।९८ / १०२२) षत्वम् । विपरीतं विलोमं च ॥ ८४ ॥ वम्यते वामम् । सूयते सव्यं, षु प्रसवे । शरीर इत्येव । अपक्रान्तं सव्यादपसव्यम् । दक्षिणं, दक्ष वृद्धौ । संकटत्यावृणोति संकटं, संप्रोदश्चकटच् (५।२।२९ / १८३०), विशेष्यलिङ्गम् । पुंलिङ्गस्तु संघट्टाद्बाध्यन्तेऽस्मिन् संबाधः । कल्यते क्षिप्यतेऽत्रान्यत्कलिलम् । गाह्यते व्याप्यत्वाद्गहनम् ॥ संकीर्यते संकीर्णं निरन्तरं व्याप्तम् । संकोलति निरन्तरीभवति संकुलम् । एतान्पूर्वत्र संबाधनन्ति व्याप्त्यर्थत्वात् । (मुण्डितं) मुडि खण्डने । (परिवापितं) परिपूर्वो वपिर्मुण्डनार्थः यथा–मद्रात्परिवापणे (५।४।६७ / २१३८) । संहितं दितं यत्रेति संदितं दोऽवखण्डने । संदानितं संयमितं बद्धं निगडितं च । दृब्धं, दृभी ग्रन्थे । विसरति स्म विस्तीर्यते स्म तन्यते स्म (विसृतं, इ०) ॥ ८६ ॥ स्मृतेर्व्यवहितमन्तर्गतम् । प्राणिधीयते स्म प्रणिहितम् । (वेल्लितं) वेल्ल चलने । (प्रेङ्खितं) इखि गत्यर्थः । धूञ् धुञ् वेत्युभयः पाठः । प्रेङ्खोलितस्तरलितो लुलितान्दोलुलितावपि ॥ ८७ ॥ (नुत्तं, नुन्नं), नुदविदेति (८।२।५६ / ३०३८) वा निष्ठा नत्वम् । अस्यते स्माऽस्तम् । निष्ठीव्यते स्म निष्ठ्यूतम् । आविध्यते स्माऽविद्धम् । परिक्षिप्यते समन्ताद्वेष्टयते स्म परिक्षिप्तम् । नियतं व्रियते स्म निवृतम् । परीतं परिवेष्टितं वलितं परिकृतं परिचारितं च । मुषिः क्र्यादिः,

2 Expanded; dispersed. 2 Deposited. 2 Multiplied.
2 Plaistered. 2 Hidden. 2 Pounded.

८९ प्रवृद्ध-प्रसृते, न्यस्त-निसृष्टे, गुणिताऽऽहते ।
निदिग्धोपचिते, गूढ-गुप्ते, गुण्ठित-रूषिते ॥

2 Melted. 2 Raised, held up. 2 Suspended in a swing.
2 Smelled. 2 Smeared; anointed. 2 Drawn; raised from a deep place.

९० द्रुताऽवदीर्णे, उद्गूर्णोद्यते, काचित-शिक्यिते ।
घ्राण-घ्राते, दिग्ध-लिप्ते, समुदक्तोद्धृते समे ॥

5 Surrounded
2 Bent; crooked.
4 Sharpened, whetted.

९१ वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम् ।
रुग्णं भुग्ने, ऽथ निशित-क्ष्णुत-शातानि तेजिते ॥

2 Mature.
3 Ashamed.
3 Chosen; appointed.
2 Joined; annexed.

९२ स्याद् विनाशोन्मुखं पक्वं, ह्रीण-ह्रीतौ तु लज्जिते ।
वृत्ते तु वृत-व्यावृत्तौ, संयोजित उपाहितः ॥

3 Attainable.
4 Flowing; dropping.
2 Arranged, or heaped.
2 Detested.

९३ प्राप्यं गम्यं समासाद्यं, स्यन्नं रीणं स्नुतं स्रुतम् ।
संगूढः स्यात् संकलितो, ऽवगीतः ख्यातगर्हणः ॥

---

मषिभ्वांदिः ॥ ८८ ॥ आहन्यते स्न– एकादिरङ्कोऽङ्कान्तरेणाऽभ्यस्यते–आहतम् । द्वे द्वे तुल्यार्थे । गुण्ठितं गुण्डितमाहुः । रूषिलौंकिको व्याप्त्यर्थः, यथा–अन्तर्गिरिरेणुरूषित (किरा० १–१४)। प्रवर्धते, प्रसरति, न्यस्यते, निसृज्यते, गुण्यते, आहन्यते, निदिह्यते, उपचीयते, गुह्यते, गुप्यते, गुण्ठ्यते, रूष्यते ॥ ८९ ॥ द्रूयते, अवदीर्यते, उद्गूर्यते । द्रुतमत्र विभिन्नम् । (उद्गूर्णं) गुरी उद्यमे । कार्यते शिक्षां कारितः । घ्रायते स्म घ्राणं, नुदविदोन्देति (८।२।५६/३०३८) वा निष्ठा नत्वम् । समुदच्यते समुदक्तं, अञ्चोऽनपादाने ( सू ८।२।४८/३०२४ ) इतीण्नास्ति ॥ ९० ॥ वलयः संजातोऽस्य वलयितम् । ( संवीतं ) व्येञ् संवरणे । ( रुग्णं ) रुजो भङ्गे । ( भुग्नं ) भुज कौटिल्ये । ( शातं, निशित ) शो तनूकरणे, शाच्छोरन्यतरस्याम् ( ७।४।४१/३०७५ ) इति वेत्वम्, उपसर्गप्राधान्यात् । शितनिशातौ च । (क्ष्णुतं) क्ष्णु तेजने । ( तेजितं ) तिज निशाने ॥९१॥ पच्यते स्म पक्वं फलादि, पचो वः (८।२।५२/३०३१) इति निष्ठा वत्वम्, आहुश्च–ओषध्यः फलपाकान्ताः ( धन्व० )। जिह्रेति स्म ( ह्रीणह्रीतौ ), नुदविदोन्देति ( ८।२।५६/३०३८ ) वा नत्वम् । व्रियते वृतः । वर्तते वृत्यते वा वृत्तः । वावृत्तः, वृतु– वावृतु वरणे [ वर्तने ], इत्थमबुद्ध्वा वृत्तव्यावृत्ताविति पेठुः, लक्ष्येऽपि–ततो वावृत्तमानसेति (–त्यमाना सेति ) भट्टिः (४-२८)। उपाधीयते स्मोपाहितः ॥९२॥ ( स्यन्नं ) स्यन्दू स्रवणे । ( रीणं ) रीङ् स्रवणे, स्वादय ओदितः ( ८।२।४५/३०११ )। ( स्नुतं ) ष्णु उद्गिरणे । विरुद्धमवगीयतेऽवगीतः ॥९३॥ विचित्रा विधा प्रकारोऽस्य विविधः । बहुरूपः पृथग्रूपो नानाविधश्च । ( अवरीणः ) अवेति विरुद्धार्थः । चूर्णनावध्वस्तोऽवचूर्णितः,

4 Various, multiform. ९४ विविधः स्याद् बहुविधो नानारूपः पृथग्विधः । 2 Censured, blamed.

2 Coarsely pounded. अवरीणो धिक्कृतश् चाप्यवध्वस्तो ऽवचूर्णितः ॥

1 Diluted decoction. ९५ अनायास-कृतं फाण्टं, स्वनितं ध्वनितं समे । 2 Sounded; making a noise.

6 Bound. बद्धे संदानितं मूतमुद्दितं संदितं सितम् ॥

2 Decocted. 1 Boiled. ९६ निष्पक्वे क्वथितं, पाके क्षीराऽऽज्य-हविषां शृतम् ।

1 Departed. 1 Become calm. निर्वाणो मुनि-वह्न्याऽऽदौ, निर्वातस् तु गतेऽनिले ॥

2 Mature, ripe. 2 Passed (as ordure). ९७ पक्वं परिणते, गूनं हन्ने, मीढं तु मूत्रिते । 2 Passed (as urine).

2 Nourished. 2 Borne. पुष्टे तु पुषितं, सोढे क्षान्तमुद्वान्तमुद्गते ॥ 2 Vomited.

2 Tamed; subdued or trained. ९८ दान्तस् तु दमिते, शान्तः शमिते, प्रार्थितेऽर्दितः ।
2 Pacified, appeased. 2 Asked, requested.

2 Made known. 2 Covered. ज्ञप्तस् तु ज्ञपिते, छन्नश् छादिते, पूजितेऽञ्चितः ॥
2 Worshipped ; revered.

2 Filled; full. ९९ पूर्णस् तु पूरिते, क्लिष्टः क्लिशिते, ऽवसिते सितः ।
1 Tired; fatigued. 2 Finished.

4 Burnt. प्रुष्ट-प्लुष्टोषिता दग्धे, तष्ट-त्वष्टौ तनूकृते ॥ 3 Pared; made thin.

---

सत्यापपाशेति (३।१।२५/२५६३) णिचि क्तः ॥ ९४ ॥ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्ध-फाण्टबाढानीति (७।२।१८/३०५८) फणेः फाण्टं साधुः त्रिफलाकषायादिसारम् । (स्वनितं, ध्वनितं) मनस्तमसोरन्यत्रेट् । (संदानितं) दान अवखण्डने । (मूतं) मूङ् बन्धने । द्यतिस्यतीति (७।४।४०/३०७४) इत्वे–उद्दितं संदितं च । षिञ बन्धने, सितः ॥ ९५ ॥ निःशेषेण पक्वं निष्पक्वम् । श्रातेः श्रपेश्च शृतं पाके (३।१।२७/३०६७) इति साधुः । निर्वाति स्म निर्वाणः, वातादन्यत्र शान्त्यर्थे साधुः ( निर्वाणोऽवाते )। आदिशब्दान्निर्वाणं मुक्तिर्निर्वृत्तिश्च, यथा– प्रिय [ या ] दर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । निर्वाणमाप्यते येन सरागेणापि चेतसा ( सु. भा. ४५७-१ )। निर्वाति निर्वातः, गतो वात इत्यर्थः ॥ ९६ ॥ परिणमतेऽवस्थान्तरं प्राप्नोति स्म, यथा– परिपक्वधीः । (गूनं) गु पुरीषोत्सर्गे, दुग्वोर्दीर्घश्च (वा० ४८३२/३०१८)। (मीढं) मिह सेचने, ढ्लोपे पूर्वस्य दीर्घोऽणः (६।३।१११/२७४)। पुष्यति स्म पुष्टम् । पोषति स्म पुषितम् । सह्यते स्म सोढं, सहिवहोरोदवर्णस्य (६।३।११२/२३५७)। (उद्वान्तः) टुवम उद्गिरणे ॥ ९७ ॥ (दान्तः) वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः (७।२।२७/३०६८) इति ण्यन्तात्क्ते वा साधुः । एवं शान्तादयः । अर्द गतौ याचने च, अर्दितः । मारणादन्यत्र मित्वेऽपि ज्ञप्तः सामान्येन निपातनात्, यथा– आज्ञापितः, आज्ञप्तः । (अञ्चितः) अञ्चेःपूजायाम् (७।२।५३/३०४७) इतीड् नलोपाभावश्च ॥ ९८ ॥ (क्लिष्टः) क्लिशःक्त्वा-निष्ठयोः (७।२।५०/३०४९) इति वेट् । (सितः) षोऽन्तकर्मणि, द्यति स्यति मास्थेति

3 Pierced. — १०० वेधितच्छिद्रितौ विद्धे, विन्न-वित्तौ विचारिते । — 3 Judged; discussed.

3 Gloomy, obscured. — निष्प्रभे विगताऽरोकौ, विलीने विद्रुत-द्रुतौ ॥ — 3 Liquid.

3 Accomplished. 3 Split. — १०१ सिद्धे निर्वृत्त-निष्पन्नौ, दारिते भिन्न-भेदितौ ।

3 Woven. — ऊतं स्यूतमुतं चेति त्रितयं तन्तु-सन्तते ॥

6 Saluted; honoured. — १०२ स्यादर्हिते नमस्यित-नमसितमपचायिताऽर्चिताऽ-पचितम् ।

4 Served; adored. — वरिवसिते वरिवस्यितमुपासितं चोपचरितं च ॥

5 Sufferring pain. — १०३ संतापित-संतप्तौ धूपित-धूपायितौ च दूनश् च ।

6 Pleased, glad, content. — हृष्टो मत्तस् तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ॥

8 Cut. — १०४ छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।

7 Fallen. — स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ॥

---

(७।४।४०/३०७४) इत्वम् । (प्रुष्ट इ०) प्रुषु प्लुषु उष दाहे । (तष्ट इ०) तक्षू त्वक्षू तनूकरणे ॥९९॥ (वेधितः) विध विधानेऽनेकार्थः । छिद्यते स्म छिद्रितः, छिद्रं संजातं वाऽस्य । व्यधेः क्तः, विद्धः । विद विचारणे, नुदविदोन्देति (८।२।५६/३०३८) नत्वं, यदाह– वेत्तेर्विन्नश्च वित्तश्च (भाष्यव० ६।२।५८) । नास्ति रोको रोचनमस्याऽरोकः । (विलीनः) लीङ् द्रवीकरणे ॥१००॥ ( भिन्न इ० ) भिदिः– रुधादिश्चुरादिश्चेति वा– इट् । ऊतं, ऊयी तन्तुसंताने, क्तः, लोपो व्योर्वलि (६।१।६६/८७३) स्यूतं, षिवु तन्तुसंताने, च्छ्वोः शूडिति ( ६।४।१९/२५६१ ) वस्योत्वम् । उतं, वेञ् तन्तुसंताने, क्तः, संप्रसारणम् । तन्तुभिः संतते विस्तृते ॥१०१॥ (निमस्यितं, इ०) नमोवरिव इति (३।३।१९/२६७५) नमसः पूजायां क्यच्, क्यस्य विभाषा ( ६।४।५०/२६६० ) इति यस्य वा लोपः । ( अपचायितं, इ० ) अपचितश्च ( ७।२।३०/३०७२ ) इति चायेर्वा साधुः । पूजितं च । वरिवसः परिचर्यायां क्यच् ॥ १०२ ॥ ( संतापित इ० ) तपिश्चुरादिर्भ्वादिश्च । ( धूपित इ० ) गुपूधूपेति ( ३।१।२८/२३०३ ) आयः, आयादय आर्धधातुके वा (३।१।३१/२३०५) । (दूनः ) दूङ् परितापे, स्वादय ओदितः ( ८।२।४५/३०७१ ) इति निष्ठा नत्वम् । प्रह्लादते स्म प्रह्लन्नः, ह्लादो निष्ठायाम् (६।४।९५/३०७३) इति ह्रस्वः ॥१०३॥ ल्वादिभ्यश्च (८।२।४४/३०१८) इति नत्वे लूनम् । छो छेदने, शाच्छोरन्यतरस्याम् ( ७।४।४१/३०७५ ) इतीत्वं वा ( छातं, छितं ) । दाप् लवने, अस्माद्दातम् । दो अवखण्डने, अस्माद् द्यतिस्यतीति ( ७।४।४०/३०७४ ) इत्वे दितम् । वृश्च्यते स्म वृक्णं, ओव्रश्चू छेदने । स्कन्नं, स्कन्दिर गतिशोषणयोः । पन्नं, पद गतौ । एते हस्तादेः

6 Obtained. १०५ लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ।
5 Sought. अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ॥

7 Wet; moistened. १०६ आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ।
6 Preserved, saved, guarded. त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ॥

5 Disregarded, despised. १०७ अवगणितमवमताऽवज्ञाते अवमानितं च परिभूते ।
6 Abandoned, left. त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे ॥

7 Spoken, said. १०८ उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम्
7 Known, understood. बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसिताऽवगते ॥

11 Promised. १०९ ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।
संगीर्ण-विदित-संश्रुत-समाहितोपश्रुतोपगतम् ॥

---

पतितेऽर्थे वर्तन्ते ॥१०४॥ प्राप्तं कर्मणि, प्राप्तप्रणिहिते समे इति कर्तरि । विन्नं, विदॢ लाभे । भावितं, भू प्राप्तौ, आधृषाद्वा ( ग० २०२ ) इत्यस्य वा णिच्, पक्षे भूतं, यथा–इत्थंभूतम् । आसादितं, आङः पदः पद्यर्थे णिच् । अन्वेषितं, जेषृ णेषृ एषृ गतौ । अन्विष्टं, इषेः तीषसहेति ( ७।२।४८/२३४० ) वेट् । गवेष मार्गणे । मार्ग अन्वेषणे । मृग अन्वेषणे ॥ १०५ ॥ आ–अद्यते–आर्द्रः पटादिः । सहार्द्रेण गुणेन वर्तत इति सार्द्रः । तिम ष्टिम आर्द्रीभावे । ( समुन्नं, इ० ) उन्दी क्लेदने, नुदविदोन्देति ( ८।२।५६/३०३८ ) वा नत्वम् । ( गोपायितं, इ० ) गुपेः, आयादय आर्धधातुके वा ( ३।१।३१/२३०५ ) ॥१०६॥ ( अवगणितं ) अवेति विपर्ययेऽर्थे । अवमतं, मन ज्ञाने । अवमानितं, मनिश्वरादिः, मान पूजायां वा । अनादृतं च । हीनयते हीनम्, ओहाक् त्यागे, निष्ठा नत्वं ओदितश्च, ( ८।२।४५/३०१९ ) घुमास्थागेतिश्च ( ६।४।६६/२४६९ ) इत्वम् ॥ १०७ ॥ ( उक्तं, उदितं ) क्ते वचिवदोः संप्रसारणम् । (अभिहितं) अभिपूर्वो धाञ्–उक्त्यर्थः, दधातेर्हिः ( ७।४।४२/३०७६ ) । ( बुद्धं ) बुध अवगमने–अनिट् । ( बुधितं ) बुधिरवबोधने सेट् । मनु अवबोधनेऽस्मान्मनितं, कृतीचृतीनृतीनामीदित्करणेन सेऽसिचिकृतचृतछृदतृदनृतः ( ७।२।५७/२५०६ ) इति विकल्पे, यस्य विभाषा ( ७।२।१५/३०२५ ) इति निषेधस्यानित्यत्वज्ञापनात् । मतं तु मन्यतेः । वेत्तेस्तु विदितं, निष्ठा । प्रतिपन्नं, पद गतौ, सर्वे गत्यर्था ज्ञानार्था इति ॥ १०८ ॥ ऊर्यूररीयुररी तु विस्तारेऽङ्गीकारे च गतिसंज्ञाः ऊर्यादिच्विडाचश्च ( १।४।६१/७६२ ), तेन ऊररीकृतमपि । ( संगीर्णं ) समःप्रतिज्ञाने

12 Praised. ११० ईलित-शस्त-पणायित-पनायित-प्रणुत-पणित-प-
नितानि ।
अपि गीर्ण-वर्णिताऽभिष्टुतेडितानि स्तुताऽर्थानि ॥

14 Eaten. १११ भक्षित-चर्वित-लिप्त-प्रत्यवसित-गिलित-खादित-
प्सातम् ।
अभ्यवहृताऽन्न-जग्ध-ग्रस्त-ग्लस्ताऽशितं भुक्ते ॥

Certain irregular Superlatives. ११२ क्षेपिष्ठ-क्षोदिष्ठ-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-बंहिष्ठाः ।
1 Most quick; 1 Smallest; 1 Dearest, largest, 1 Most corpulent; 1 Most numerous.
क्षिप्र-क्षुद्राऽभीप्सित-पृथु-पीवर-बहुल-प्रकर्षाऽर्थाः ॥

1 Hardest; 1 Longest; ११३ साधिष्ठ-द्राघिष्ठ-स्फेष्ठ-गरिष्ठ-ह्रसिष्ठ-वृन्दिष्ठाः ।
1 Most firm. 1 Heaviest; 1 Shortest; 1 Most abundant.
बाढ-व्यायत-बहु-गुरु-वामन-वृन्दारकाऽतिशये ॥

इति विशेष्यनिघ्न-वर्गः १, अत्र मूलश्लोकाः ११२॥, क्षे० श्लो० ॥

---

( ११३।५२ / २७२५ ) इति संगीरङ्गीकारार्थः, गॄ शब्दे ॥ १०९ ॥ ईलितं, ईड स्तुतौ, डलयोरेकत्वम् । ( शस्तं ) शसु स्तुतौ । ( पणायितं, इ० ) पण व्यवहारे स्तुतौ च, पन च. आयादय आर्धधातुके वा ( ३।१।३१ / २३०५ ) । अपि स्वार्थे, उपसर्ग इत्येके । गीर्ण, गॄ शब्दे ॥ ११० ॥ लिप्तस्थाने लीढं पेठुः । ( प्रत्यवसितं ) प्रत्यवपूर्वः स्यतिर्भोजने वर्तते । ( गिलितं ) गॄ निगरणे, अचि विभाषा ( ८।२।२१ / २५४२ ) इति लत्वम् । ( प्सातं ) प्सा भक्षणे । ( अभ्यवहृतं ) अभ्यववपूर्वो हृञ् भोजने । अद्यते स्माऽन्नं, अदोऽनन्ने ( ३।२।६८ / २९७७ ) इति निपातनात्साधुः । ( जग्धं ) अबाधकान्यपि निपातनानि भवन्तीति पक्षे जग्धिः । वाच्यं चात्र—ब्रह्मण्यो ब्राह्मणहितो वीतदम्भस्त्वकल्मषः । असंमतः प्रणाय्यः स्याच्चक्षुष्यः प्रियदर्शनः ॥ वैरागिको विरागार्हः शंसितस्तु सुनिश्चितः । ईर्ष्यालुः कुहनो गोष्ठश्वोऽन्यद्वेष्टा स्वगेहगः ( ? ) ॥ [ गोष्ठश्वः, अचतुरेति ( ५।४।७७ / ९४५ ) साधुः । ] तीक्ष्णोपायेन योऽन्विच्छेत्स आयःशूलिको जनः (वै. १-५.४-७४) । गेहेशूरो गृहेनर्दी पिण्डीशूरोऽथ संस्कृतः ( वै. १-५-४-७० ) ॥ व्युत्पन्नप्रहतक्षुण्णा अन्वेष्टानुपदी समौ ॥ नीलीरागः स्थिरस्नेहो हरिद्रारागकोऽन्यथा ( वै. १-५-४-२६ ) ॥ आसीन उपविष्टः स्यादुर्ध्वस्थोर्ध्वदमौ स्थिते ( वै. १-५-४-१० ) । उत्पश्य उन्मुखे गृह्यः पक्षे ( क्ष्ये ) न्युब्जस्त्वधोमुखे ॥ १११ ॥ अतिशयेन क्षिप्रः क्षेपिष्ठः । एवं क्षुद्रः क्षोदिष्ठः । अतिशयेन प्रियः प्रेष्ठः । एवमुरुर्वरिष्ठः, प्रियस्थिरस्फिरोर्विति ( ६।४।१५७ / २०१६ ) प्रस्थस्फवर्बंहादेशाः । स्थूलः स्थविष्ठः, स्थूलदूरयुवेति ( ६।४।१५६ / २०१५ ) यणादिर्लुप्यते पूर्वस्य च गुणः । बहुलो बंहिष्ठः ॥ ११२ ॥ अतिशयेन बाढं साधिष्ठं, अन्तिकबाढयोर्नेदसाधौ ( ५।३।६३ / २०२४ ) । एवं दीर्घो द्राघिष्ठः । स्फिरः

( बहुः ) स्फेष्ठः । गुरुर्गरिष्ठः । ह्रस्वो ह्रसिष्ठः । वृन्दारको वृन्दिष्ठः, प्रियस्थिरेति ( ६।४।१५७/२०१६ ) आदेशः । वाच्यं चात्र—ग्राम्ये ग्रामेयकग्रामीणावाच्छिन्नो बलाध्हृते । चोरिते मुषितं मुष्टं स्थपुटं तु नतोन्नतम् ॥ उत्पाटितोन्मूलितार्थमुध्दृतं वर्हिते वृढम् । आचितं निचितं पूर्णं पूरितं निभृते भृतम् ॥ प्रतिश्रितं प्रविष्टं स्यादन्तर्गडु निरर्थके । न्यञ्चितं स्यादधः क्षिप्तं क्षिप्तमूर्ध्वमुदञ्चितम् ॥ स्पष्टेऽचितं चतुर्थं तु तुरीयं तुर्यमास्थिते आकारे श्लिष्टसंपृक्तः खचिते क्षुरितभूषितौ ( ? ) ॥ प्रचर्चितं प्रतीष्टं द्वेष्यासृष्याक्षिगताः समाः । श्यानं शीनेऽन्वितेऽन्वीतं प्रकाशप्रकटौ स्फुटे ॥ ११३ ॥ इति विशेष्यनिघ्नवर्गः । १ ।

---

# अथ संकीर्ण-वर्गः २

१ प्रकृति-प्रत्ययाऽर्थाऽऽद्यैः संकीर्णे लिङ्गमुन्नयेत् ।
कर्म क्रिया, तत्-सातत्ये गम्ये स्युरपरस्पराः ॥

2 Action.
1 Continual.

२ साकल्याऽऽसंग-वचने पारायण-परायणे ।
यदृच्छा स्वैरिता, हेतु-शून्या त्वास्था विलक्षणम् ॥

1 Tolality.
1 Adherence; attachment.
2 Wilfulness; independence.
1 Vain and causeless state.

---

प्रकृत्याद्यैः प्रकीर्णकेऽत्र लिङ्गमुत्प्रेक्षेत । प्रकृत्या ( यथा )— अपरस्पराः सार्था यान्ति, ( सि. कौ. सू. १०५९ ) अपरस्पराणि क्षगानि वहन्ति [ अक्षराणि वदन्ति ] । प्रत्ययेन (यथा)—क्तिन्, शान्तिः, नपुंसके भावे क्तः (३।३।११४/३०९०) ल्युट् च—आसितं, तर्पणम् । अर्थेन तु ( यथा )— कार्मैव कार्मणम् ( सि. कौ. सू. २१०४ ) आद्यशब्दाद्रूपभेदसाहचर्यादिना ( यथा )—यदृच्छा स्वैरिता, शमथस्तु शमः । (कर्म क्रिया) भावकर्मणोर्मनिन् (सर्वधातुभ्यो मनिन्), कृञः श च (३।३।१००/३२७७) । क्रियासंततत्वे गम्यमाने, अपरे च परे च—अपरस्पराः सार्था यान्ति, अपरे च परे च यत्र तदपरस्परं कृत्वा वा, अपरस्पराःक्रियासातत्ये (६।१।४४/१०५९) इति साधुः ॥ १ ॥ पारमयन्ते येन सकलं व्याप्नुवन्ति पारायणम् । त्वरणं तुरणं वा तूः, तया हेतुभूतया—अयन्ते येनासक्तं गच्छन्ति तत्तुरायणम् । या का—इच्छा यदृच्छा, यदृच्छाशक्तिजानुकरणेति (भाष्यव० १।१।२) वाक्यलिङ्गात्साधुः । स्वेन—ईर्ते तच्छीलः स्वैरी, भावे तल् तस्य भावस्त्वतलौ ( ५।१।११९/१७८१ ), स्वैरस्य भावो वा । आसनमास्या, ण्यासश्रन्थेति ( ३।३।१०७/३२८४ ) युचि प्राप्ते, वाऽसरूपेण, वाऽसरूपोऽस्त्रियां ( ३।१।९४/२८३० ) ऋहलोर्ण्यत् ( ३।१।१२४/२८७२ ), अस्त्रियामिति निषेधो द्वयोरेवोत्सर्गापवादयोर्न त्वेकस्य । विगतं लक्षणमालोचनं यत्रेति विलक्षणमप्रतिपत्तिरित्यर्थः

3 Quiet. 3 Self-command. 1 Approved occupation. 2 A desirable gift.

३ शमथस् तु शमः शान्तिर्, दान्तिस् तु दमथो दमः ।
अवदानं कर्म वृत्तं, काम्यदानं प्रवारणम् ॥

2 Subduing by charms. 2 Magic. 2 Tremour. 3 Satisfaction.

४ वशक्रिया संवननं, मूलकर्म तु कार्मणम् ।
विधूननं विधुवनं, तर्पणं प्रीणनाऽवनम् ॥

3 Warding of a blow. 3 Sewing. 3 Tearing, rending.

५ पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि ।
सेवनं सीवनं स्यूतिर्, विदरः स्फुटनं भिदा ॥

2 Curse, imprecation. 2 Sensation, perception. 2 Co-extending; pervading. 4 Begging.

६ आक्रोशनमभीषङ्गः, संवेदो वेदना न ना ।
संमूर्च्छनमभिव्याप्तिर्, याच्ञा भिक्षाऽर्थनाऽर्दना ॥

2 Cutting. 3 Courtesy; welcome or adieu. 2 Received doctrine. 3 Loss.

७ वर्धनं छेदने, ऽथ द्वे आनन्दन-सभाजने ।
आप्रच्छन्नमथाऽऽम्नायः संप्रदायः, क्षये क्षिया ॥

---

॥ २ ॥ ( शमथः, इ० ) औणादिकोऽथच्, घञि तु नोदात्तोपदेशस्येति ( ७।३।३४ / २७६३ ) वृध्द्यभावः । कामक्रोधाद्यभावः शान्तिस्तपःक्लेशसहिष्णुता दान्तिः । अवदीयतेऽनेन–अवदानं सोत्कर्षचरितं, वृत्तं परिशुद्धं, निर्व्यूढमित्येके । ( कामदानं ) कामनापूर्वं दानं स्वेच्छात्याग इत्यर्थः । काम्यदानमिति तु युक्तः पाठः ॥ ३ ॥ ( वशक्रिया ) वशीकरणम् । वनु च नोच्यते ( ग० ? ) इत्यनेकार्थत्वात्संवननं, वनु याचने वा । मूलैरोषधिभिर्यद्वशीकरणं तत्, कर्मैव कार्मणं, तद्युक्तात्कर्मणोऽण् ( ५।४।३६ / २१०४ ) । ( विधूननं ) धूञ् णिच्, धूञ्प्रीञोर्नुक् ( वा० ४५११ / २५७२ ), ल्युट् । विधुवनमिति धू विधूनने, कुटादित्वाद्ङित्, गाङ्कुटादिभ्योऽञ्णिङित् ( १।२।१ / २४६१ ) । ( अवनं ) अव प्रीतौ ॥४॥ प्रहर्तुमुद्यतस्य हस्तधारणं रोधः, रक्ष्यस्य पृष्ठे हस्तस्थापनं वा । ( सीवनं ) ष्ठिवुसिव्योर्दीर्घश्च ( स. कं. २।४।१६७ ) इति वा दीर्घः । सेवनं स्यूतिः, छ्वोःशूडिति ( ? ) ऊठ् । ( विदरः ) दॄ विदारणे, ॠदोरप् ( ३।३।५७ / ३२३२ ) । ( स्फुटनं ) स्फुटः कुटादिः । भेदनं भिदा, षिद्भिदादिभ्योऽङ् ( ३।३।१०४ / ३२८१ ) ॥ ५ ॥ अभिषञ्जनं पराभिमुख्येन वाच्ययोजनमभीषङ्गः, उपसर्गस्य घञीति ( ६।३।१२२ / १०४४ ) दीर्घः । वेदना, विद चेतने, णिच्, ण्यासश्रन्थेति ( ३।३।१०७ / ३२८१ ) युच्, वेत्तेर्वा, घट्टिवन्दिविदिभ्यश्चोपसंख्यानात् ( वा० २२२२ / ३२८४ ) । ल्युटि तु वेदनम् । ( संमूर्च्छनं ) मूर्च्छा मोहसमुच्छ्राययोः । अभिव्यापनं सर्वतो वृद्धिः । याचनं याच्ञा, यजयाचेति ( ३।३।९० / ३२६८ ) नङ् । ( अर्दना ) अर्द याचनेऽस्मात् स्वार्थे णिच्, युच् ॥ ६ ॥ ( वर्धनं ) वर्ध छेदनपूरणयोः । ( सभाजनं ) सभाज प्रीतिदर्शने । ( आप्रच्छनं ) आङ्पूर्वः प्रच्छिरालिङ्गनादिनानन्दनार्थः, यथा–आपृच्छस्व प्रियसखममुम् ( मेघ० १–९ ) । वृद्धपारंपर्येणाम्नानमाम्नायः । ( क्षयः )

2 Taking. 2 Wish, desire.

८ ग्रहे ग्राहो, वशः कान्तौ, रक्षणस् त्राणे, रणः क्वणे ।

2 Protection; defence. 2 Sound, noise.

2 Perforation, piercing.

व्यधो वेधे, पचा पाके, हवो हूतौ, वरो वृत्तौ ॥

2 Maturity. 2 Calling; challenging. 2 Engaging; appointing.

2 Combustion; burning.

९ ओषः प्लोषे, नयो नाये, ज्यानिर् जीर्णौ, भ्रमो भ्रमौ ।

2 Guiding; directing. 2 Wearing, growing old. 2 Whirling; going round.

2 Increase, growth. 2 Fame, notoriety.

स्फातिर् वृद्धौ, प्रथा ख्यातौ, स्पृष्टिः पृक्तौ, स्नवः स्नवे ॥

2 Touch, contact. 2 Oozing, dripping.

2 Thriving. 2 Throbbing. 2 Bringing forth ( as young ).

१० एधा समृद्धौ, स्फुरणे स्फुरणा, प्रमितौ प्रमा । 2 True knowledge.

प्रसूतिः प्रसवे, श्च्योते प्राघारः, क्लमथः क्लमे ॥

2 Pouring forth; aspersion. 2 Fatigue.

2 Excellence. 2 Union; junction. 2 Sending; directing.

११ उत्कर्षो ऽतिशये, संधिः श्लेषे, विषय आश्रये। 2 Refuge; asylum.

क्षिपायां क्षेपणं, गीर्णिर् गिरौ, गुरणमुद्यमे ॥

2 Swallowing. 2 Effort, exertion.

---

क्षि क्षये, एरच् ( ३।३।५६/३२३१ ) । ( क्षिया ) क्षीष् हिंसायां, अङ् ॥ ७ ॥ ( ग्रहः ) ग्रहवृद्रिति ( ३।३।५८/३२३४ ) अप् । ( ग्राहः ) बाहुलकाद् घञ् ( भावे ) । ( वशः ) वशिरण्योरुपसंख्यानादप् ( वा० २२०३/३२३४ ) । (रक्षणः) यजयाचेति (३।३।९०/३२६८) भावे नङ् । रक्ष इत्य च पाठः, गुरोश्च हलः (३।३।१०३/३२८०) इत्यकारः स्यात् । रणनं रणः अप् । ( क्वणः ) क्वणो वीणायां च ( ३।३।६५/३२४२ ) । व्यधनं व्यधः, व्यधजपोरनुपसर्गे (३।३।६१/३२३८) इत्यप् । वेधनं वेधः, विध विधाने । पचनं पचा, षित्वादङ्, षिद्भिदादिभ्योऽङ्, (३।३।१०४/३२८१) । पक्तिर्बाहुलकात् । (हवः) ह्वः संप्रसारणं च (६।१।३२/२५८६) इत्यप् वरणं वरः, व्रियते वा, यत्कात्यः—तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः, वृञ् वरणे, वृङ् संभक्तौ च ॥ ८ ॥ ( ओषः ) उष दाहे । ( नायः ) श्रिणीभुवोऽनुपसर्गे (३।३।२४/३१९५) इति घञ् । (ज्यानिः) ग्लाम्लाज्याहाभ्योऽनिः (स. कं. २।४।१५६) । जरणं जीर्णिः, ॠल्वादिभ्यः क्तिन्निष्ठावत ( वा० ४८२६/३२७२ ) । ( भ्रमः ) घञ् । भ्रमणं भ्रमिः इक् कृष्यादिभ्यः (वा० २२३२/३२८५) । ( स्फातिः ) स्फायी वृद्धौ । प्रथनं प्रथा, घटादयः-षितः ( ग० १८६ ) इत्यङ् । पृक्तिः, पृची संपर्के । ( स्नवः ) प्रस्नवणे ॥ ९ ॥ विधा समृद्धाविस्येके पेठुः । एधनमेधा, षिद्भिदादिभ्योऽङ् (३।३।१०४/३२८१) । स्फुरणं स्फुरणा, स्फुर चलने कुटादिः । ( प्रमितिः ) माङ् माने, क्तिन्, द्यतिस्यतीति ( ७।४।४०/३०७४ ) इत्वम् । ( प्रमा ) आतश्चोपसर्गे ( ३।१।१३६/२८९८ ) इत्यङ् । ( प्रसूतिः, इ० ) षूङ् प्राणिगर्भविमोचने, षू प्रसवे वा । (श्च्योतः) श्च्युतिर् क्षरणे । (प्राघारः) घृ क्षरणदीप्त्योः । ( क्लमथः ) औणादिकोऽप्यथच्, क्लमथुरित्यपपाठः ॥ १० ॥ उर्ध्वं कर्षणं ( उत्कर्षः ) । (संधिः) उपसर्गे घोः किः (३।३।९२/३२७०) । विषीयतेऽत्र विषयः, विषि-

2 Raising. १२ उन्नाय उन्नये, श्राय: श्रयणे, जयने जय: ।
2 Reliance; taking refuge. 2 Conquest, victory.

2 Discourse, speech. 2 Pride. निगादो निगदे, मादो मद, उद्वेग उद्भ्रमे ॥ 2 Regret.

2 Trituration of perfumes. १३ विमर्दनं परिमलो, ऽभ्युपपत्तिरनुग्रह: । 2 Conferring of a benefit.

1 Disfavour. 2 Attack, onset. निग्रहस् तद्-विरुद्ध: स्यादभियोगस् त्वभिग्रह: ॥

2 Clinching of the fist. १४ मुष्टिबन्धस् तु संग्राहो, डिम्बे डमर-विप्लवौ । 3 Affray, assault.

3 Ligament. fetters. 3 Morbid heat. बन्धनं प्रसितिश् चार:, स्पर्श: स्प्रष्टोपतप्तरि ॥

3 Injury. 3 Hint, sign, token. १५ निकारो विप्रकार: स्यादाकारस् त्विङ्ग इङ्गितम् ।

4 Change of form. परिणामो विकारो, द्वे समे विकृति-विक्रिये ॥

---

णोति वा, आश्रयस्थानम् । (क्षिपा) भिदादित्वादङ् षिद्भिदादीति, (३।३।१०४ / ३२८९) । गिरगं गिरिः, इक् कृष्यादिभ्यः ( वा० २२३२ / ३२८५ ) । कुटादित्वाद् गुरणमाहुः, चुरादेर्गोरणमपि । अड उद्यमे इति निपातनादुद्यमः ॥ ११ ॥ ऊर्ध्वं नयनमनुसरणं वोन्नायः, अवोदोर्नियः ( ३।३।२६ / ३१९७ ) इति घञ् । ( उन्नयः ) बाहुलकाद्– एरच् ( ३।३।५६ / ३२३१ ) ( श्रायः ) श्रिणीभुवोऽनुपसर्गे ( ३।३।२४ / ३१९५ ) इति घञ् । ( जपः ) व्यधजपोरनुपसर्गे ( ३।३।६१ / ३२३८ ) इत्यप् । ( निगाद इ० ) स्फुटकथने, नौ गदनदेति ( ३।३।६४ / ३२४१ ) वा घञ् । ( मदः ) मदोऽनुपसर्गे ( ३।३।६७ / ३२४४ ) इत्यप् । ( मादः ) सध मादस्थयोश्छन्दसि ( ६।३।९६ / ३५२९ ) इति निपातनाद् घञ् । ( उद्वेगः ) ओविजी भयचलनयोः, घञ् ॥ १२ ॥ ( परिमलः ) संज्ञापूर्वकत्वाद् वृध्द्यभावः । अभ्यु-पपत्त्यादिर्नानादिभिः स्वीकारे वर्तते । ( अनुग्रहः ) ग्रहेः–ग्रहवृद– ( ३।३।५८ / ३२३४ ) इत्यप् । नियमनाय ग्रहणं निग्रहः, निरोध इति पाठ्यम्, विग्रहो विरोध इति वा । आभिमुख्येनोद्यमः ( अभियोगः ) ॥ १३ ॥ समि मुष्टौ ( ३।३।३६ / ३२०८ ) इति घञ्, संग्राहो मल्लस्य ( सि. कौ. सू. ३२०८ ) । डयनं विद्रवो डिम्बः, डीङ् गतौ, अशस्त्रकलहः, लुण्ठ्यादिरित्येके । डयनं डमरः । ( प्रसितिः ) षिञ् बन्धने । स्वृ शब्दोपतापयोः, स्वरति स्वारः । ( स्पर्शः ) पदरुज– ( ३।३।१६ / ३१८२ ) इत्यत्र स्पृश उपतापे एव ( स. कं. २।४।२४ ) इति कर्तरि घञ् । ( स्प्रष्टा ) वाऽसरूपात्तृच्, वाऽसरूपोऽस्त्रियाम् ( ३।१।९४ / २८३० ) ॥ १४ ॥ निकृष्टं करणं निकारः खलीकारः । (इङ्गः, इङ्गितं) भावे घञ्क्तौ । इङ्गिताकाराभ्यां भावज्ञानमित्यादौ गोबली-वर्दन्यायेन– इङ्गितं चेष्टितम् । आकृतिग्रहणमाकारो मुखरागादिरिति कौटिल्यो (१–१५) व्याख्यत्, अयं त्वनयोराशयज्ञापकत्वादैक्यं मन्यते । विकारेऽर्थे त्रयो वर्तन्ते,

2 Loss.
2 Assemblage.
2 Abstraction.

१६ अपहारस् त्वपचयः, समाहारः समुच्चयः ।
प्रत्याहार उपादानं, विहारस् तु परिक्रमः ॥

2 Walking for pleasure.

2 Robbery.
2 Extraction.
2 Imitation.
1 Expenditure.

१७ अभिहारोऽभिग्रहणं, निर्हारोऽभ्यवकर्षणम् ।
अनुहारोऽनुकारः स्यादर्थस्याऽपगमे व्ययः ॥

2 Stream.
6 Forbearance.

१८ प्रवाहस् तु प्रवृत्तिः स्यात्, प्रवहो गमनं बहिः ।
वियामो वियमो यामो यमः संयाम-संयमौ ॥

1 Going forth; issuing.

2 Incantation to destroy.

१९ हिंसाकर्माऽभिचारः स्याज्, जागर्या जागरा द्वयोः ।

2 Waking, watching.

2 Obstacle; impediment.

विघ्नोऽन्तरायः प्रत्यूहः, स्यादुपघ्नोऽन्तिकाश्रये ॥

2 Contiguous support.

2 Enjoyment.
2 Encompassing; surrounding.
2 Separation.

२० निर्वेश उपभोगः स्यात्, परिसर्पः परिक्रिया ।
विधुरं तु प्रविश्लेषे, ऽभिप्रायश् छन्द आशयः ॥

3 Meaning; intention.

---

द्वयोस्तु साम्यं स्त्रीत्वात् ॥ १५ ॥ (अपहारः) हानिरित्यर्थः । उपसर्गवैचित्र्यादर्थभेदः । (समाहारः) अनेकस्यैकत्राध्यावापः । (प्रत्याहारः) एकत्र ढौकनं–अन्नादिकविषयेभ्य इन्द्रियाणामाकर्षणं च । (विहारः) क्रीडासंचारः ॥ १६ ॥ (अभिहारः) आभिमुख्येन हरणम् । (निर्हारः) युक्त्या निःसाराकर्षणम् । अनु सादृश्ये । (व्ययः) व्यय वित्तसमुत्सर्गे ॥ १७ ॥ प्रारम्भो वहनस्य प्रवाहः कार्यारम्भः अविच्छिन्ना जलादेः प्रवृत्तिर्वा । (प्रवहः) गोचरसंचरेति (३।३।११९ / ३२९८) साधुः, बाहुलकाद्ज्वा । द्वौ द्वौ भिन्नार्थौ, विविधं यमनं वियामः, उपरतिमात्रं यमः, संयमनं संयमः, यमःसमुपनिविषुचेति (३।३।६३ / ३२४०) वा घञ् ॥ १८ ॥ अभिभवितुं चरणं मारणोच्चाटनादिकृत्यासाधनम् । (जागर्या) इच्छा (३।३।१०१ / ३२७८) इत्यत्र जागर्तेरकारो वा वक्तव्यः (वा० २२१६ / ३२७८) पक्षे क्यप्, जाग्रोऽविचिण्णल्ङित्सु (७।३।८५ / ३४८०) इति गुणः, घञि तु जागरः । विहन्त्यस्मिन् विघ्नः, घञर्थे कविधानम् (वा० २२०४ / ३२३४), विहन्यते कार्यमनेन वा । अन्तरायनं कार्यव्यवधानमन्तरायः । प्रतीपमूहनं प्रत्यूहः । उपसमीपे हन्यते गम्यतेऽस्मिन्नुपघ्नः, उपघ्न आश्रये (३।३।८५ / ३२६३) इति साधुः ॥१९॥ निःपूर्वो विशिरुपभोगार्थे । सर्वत्राऽत्र प्रत्यये तन्त्रम्, अतो निर्वेशनमुपभुक्तिः, उपसर्पणं, परिकर इत्याद्युन्नेयम् । समन्तात्सर्पणं परिसर्पः । विघटि-[ट्टि] ता धूः कार्यभारोऽत्र विधुरमिति प्रतीच्याः, विरुद्धं धान (?) मित्युदीच्याः (अभिप्रायः) प्रीङ् कान्तौ । छन्दयति– आह्लादयते छन्दः, अच् । आशेरतेऽस्मिन्

| | | |
|---|---|---|
| 2 Abridgment.<br>2 Contradiction.<br>2 Perambulation.<br>3 Stay. | २१ संक्षेपणं समसनं, पर्यवस्था विरोधनम् ।<br>परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ | |
| 2 Diffusion.<br>1 Prolixity.<br>2 Rubbing of the person. | २२ विस्तारो विग्रहो व्यासः, स च शब्दस्य विस्तरः ।<br>संवाहनं मर्दनं स्याद्, विनाशः स्याददर्शनम् ॥ | 2 Disappearance. |
| 2 Acquaintance.<br>2 Spreading.<br>2 Scarcity.<br>2 Proximity. | २३ संस्तवः स्यात् परिचयः, प्रसरस् तु विसर्पणम् ।<br>नीवाकस् तु प्रयामः स्यात्, संनिधिः संनिकर्षणम् ॥ | |
| 3 Reaping.<br>2 Occasion; opportunity. | २४ लवोऽभिलावो लवने, निष्पावः पवने पवः ।<br>प्रस्तावः स्यादपसरस्, त्रसरः सूत्रवेष्टनम् ॥ | 3 Winnowing; cleaning.<br>2 A Shuttle. |
| 2 First pregnancy of cows.<br>2 Intellectual faculty.<br>2 Difficult progress. | २५ प्रजनः स्यादुपसरः, प्रश्रय-प्रणयौ समौ ।<br>धीशक्तिर् निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥ | 2 Affectionate solicitation. |
| 2 Act tending to a main object.<br>2 Haste. hurry. | २६ प्रत्युत्क्रमः प्रयोगाऽर्थः, प्रक्रमः स्यादुपक्रमः ।<br>स्यादभ्यादानमुद्घात आरम्भः, संभ्रमस् त्वरा ॥ | 2 Beginning. |

---

भावा इत्याशयः ॥ २० ॥ संगृहीतो [ वि ] क्षेपो विप्रकीर्णता संक्षेपणम् । एवं समसनम् । पर्यवस्थानं ( पर्यवस्था ) । पर्यन्ते समन्ताद्वा सरणं परिसर्या, परिचर्या-परिसर्यामृगयाटाट्यानामुपसंख्यानात् ( वा० २२१५/३२७८ ) क्यप् । ( आस्या ) वासरूपत्वात् वाऽसरूपोऽस्त्रियाम् ( ३।१।९४/२८३० ) ण्यत् । ( आसना ) ण्यासश्रन्थेति ( ३।३।१०७/३२८४ ) युच् ॥ २१ ॥ ( विस्तारः ) प्रथने वावशब्दे ( ३।३।३३/३२०४ ) इति घञ् । विस्तीर्णं ग्रहणं विग्रहः विविधमसनं व्यासः । ( विस्तरः ) घञः शब्दे निषेधाद् ( अप् ) । संवाहनं स्पर्शसुखमिति तु लक्ष्यम् ( ? ) ॥ २२ ॥ संगतं स्तवनं संस्तवः, धातोरनेकार्थस्य चोपसर्गेणैषोऽर्थो द्योत्यते । समन्ताच्चयनं परिचयः । प्रकर्षेण निकटे सरणं प्रसरः, बाहुलकादप् । नियतं वचनं नीवाकः, तुलाकृतं न्यूनाधिक्यं क्रयादरो वा । संनिपूर्वो धाञ् नैकट्यार्थे ॥२३॥ (अभिलावः) निरभ्योः पूल्वोः ( ३।३।२८/३२९९ ) इति घञ् । ( निष्पावः ) धान्यादेर्निर्बुसीकरणम् । प्रसङ्गेन स्तवनं प्रस्तावः, प्रे द्रुस्तुस्रुवः ( ३।३।२७/३२९८ ) इति घञ् । त्रस्यति चलति त्रसरः, सूत्रं वेष्टयते यत्र वानार्थम् ॥ २४ ॥ प्रजायतेऽस्मिन् प्रजनः पशूनां गर्भग्रहणकालः, ( सि. कौ. सू. ३२४८ ) जनिवध्योश्च ( ७।३।३५/२५१२ ) इति वृध्द्यभावः । ( उपसरः ) प्रजने सर्तेः ( ३।३।७१/३२४८ ) इत्यप् । ( प्रसरः ) प्रीत्या प्रार्थनम् । धीशक्तिः प्रज्ञासामर्थ्यमष्टधा । संक्रामन्त्यनेन संक्रामः, संक्रम इत्येके, सेत्वादिः, यत्कौटिल्यः– मुखसमः संक्रमः ( ? ) । दुर्गं संचरन्त्यनेन, गोचरसंचरेति ( ३।३।११९/३२९८ ) साधुः, घञि

2 Impediment. २७ प्रतिबन्धः प्रतिष्टम्भो, ऽवनायस् तु निपातनम् । 2 Causing to descend.

2 Apprehension. 2 Smearing. उपलम्भस् त्वनुभवः, समालम्भो विलेपनम् ॥

2 Separation of lovers. २८ विप्रलम्भो विप्रयोगो, विलम्भस् त्वतिसर्जनम् । 2 Liberality.

2 Celebrity. विश्रावस् तु प्रतिख्यातिरवेक्षा प्रतिजागरः ॥ 2 Attention.

3 Reading lecture. २९ निपाठ-निपठौ पाठे, तेम-स्तेमौ समुन्दने । 3 Wetness.

3 Ditress from disease. आदीनवाऽऽस्रवौ क्लेशे, मेलके संग-संगमौ ॥ 3 Meeting; union.

5 Research. ३० संवीक्षणं विचयनं मार्गणं मृगणा मृगः ।

4 Embrace. परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम् ॥

5 Sight; seeing; looking. ३१ निर्वर्णनं तु निध्यानं दर्शनाऽऽलोकनेक्षणम् ।

4 Rejection; disallowance. प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥

---

तु संचारः ॥२५॥ प्रयुक्तिः कर्मारम्भे प्रयोगः, प्रकृष्टो युद्धार्थो (योगः) (प्रत्युत्क्रमः), [ प्रकृष्टार्थे प्रत्युदौ प्रार्थौ ], प्रत्युत्क्रान्तिर्वा । ( प्रक्रम इ० ) प्रोपौ– आरम्भार्थे । आभिमुख्येनादानमभ्यादानम् । उद्धननमुद्घातः, उपोद्घातोऽपि, यदाहुः–चिन्तां प्रकृतसिध्यर्थामुपोद्घातं प्रचक्षते ( ? ) । (त्वरा) त्वरेर्घटादित्वात् षित्त्वादङ्, षिद्भिदादीति ( ३।३।१०४ / ३।२।९ ) ॥ २६ ॥ प्रतिष्टम्भनं रोधः, प्रतेस्तम्भेः ( ८।३।६७ / ३।२।७२ ) इति षत्वम् । अवनयनमवनायः खलीकारः, अवोदोर्नियः ( ३।३।२६ / ३।२।९७ ) इति घञ् । नियातनं, यत निकारोपस्कारयोः । उपलब्धिरुपलम्भः, उपसर्गात्खल्घञोः ( ७।१।६७ / ३।३।७६ ) इति नुम् । समाङ्पूर्वो लभिश्चर्चार्थे ॥ २७ ॥ विरहो विसंवादो वा । (विलम्भः) दानार्थे । ( विश्रावः ) वौ क्षुश्रुवः ( ३।३।२५ / ३।१।९६ ) इति घञ्, प्रसिध्यर्थे । (अवेक्षा) अवधानार्थे ॥ २८ ॥ ( निपाठ इ० ) नौ गदनदेति ( ३।३।६४ / ३।२।४९ ) वा घञ् । ( तेम इ० ) तिम ष्टिम ष्टीम आर्द्रीभावे । ( समुन्दनं ) उन्दी क्लेदने । ( आदीनवः ) दीङ् क्षये । आस्रवन्तीन्द्रियाण्यनेनास्रवः, यज्जैनाः– जीवाजीवास्रवसंवरनिर्जरबन्धमुक्तयः सप्त पदार्थाः । मेलनं मेलः, मिलिर्लौकिकः । सञ्जनं सङ्गः, घञ् । संगतिः संगमः ग्रहवृदृनिश्चिगमश्च ( ३।३।५८ / ३।२।३४ ) इत्यप् ॥ २९ ॥ अन्वीक्षणमन्वेषणमित्येके पेठुः । (मार्गणं) मार्ग अन्वेषणे, ल्युट् । ( मृगणा ) मृग अन्वेषणे, युच्, अदन्तत्वाद् गुणाभावः । मृगः एरच् ( ३।३।५६ / ३।२।३९ ), एरजण्यन्तानाम् ( ज्ञा०? ) इत्यस्य प्रायिकत्वात् । गवेषणं च । ( परिरम्भः ) रभेरशब्लिटोः ( ७।१।६३ / २।५८।९ ) इत्यचि नुम्, आलिङ्गनार्थे ॥३०॥ (प्रत्याख्यानं, इ०) निराकरणार्थे ॥३१॥ (उपशायः) व्युपयोःशेतेःपर्याये ( ३।३।३९ / ३।२।९९ )

2 Watching alternately.
4 Censure; reproach.

३२ उपशायो विशायश् च पर्याय-शयनाऽर्थकौ ।
अर्तनं च ऋतीया च हृणीया च घृणाऽर्थकाः ॥

4 Contrariety; opposition.
4 Transgression.

३३ स्याद् व्यत्यासो विपर्यासो व्यत्ययश् च विपर्यये ।
पर्ययोऽतिक्रमस् तस्मिन्नतिपात उपात्ययः ॥

1 Mission after calling.
1 Place where the priests stand.

३४ प्रेषणं यत् समाहूय तत्र स्यात् प्रतिशासनम् ।
स संस्तावः क्रतुषु या स्तुति-भूमिर् द्विजन्मनाम् ॥

1 A carpenter's work-bench.
2 Tool for cutting corn and grass.

३५ निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।
स्तम्बघ्नस् तु स्तम्बघनः स्तम्बो येन निहन्यते ॥

1 An auger.
1 Round; circular
2 Winnowing of corn.

३६ आविधो विध्यते येन तत्र, विष्वक्-समे निघः ।
उत्कारश् च निकारश् च द्वौ धान्योत्क्षेपणाऽर्थकौ ॥

1 Swallowing, etc.
4 Stopping, ceasing.
4 Spitting.

३७ निगारोद्गार-विक्षावोद्ग्राहास् तु गरणाऽऽदिषु ।
आरत्यवरति-विरतय उपरामे, ऽथा ऽस्त्रियां निष्ठेवः ॥

---

इति घञ् । पर्यायः क्रमः, ( यथा )– तवाऽद्य राजोपशायः । ( सि. कौ. ३२११ ) ऋतिः सौत्रो घृणार्थः, ऋतेरीयङ् (३।१।२९/२४२२) । हृणीङ् कण्ड्वादिः, यक्, अ प्रत्ययात् (३।३।१०२/३२७९) ॥३२॥ व्यतिक्रम्यासनं व्यत्यासः । विपरीतासनं विपर्यासः, अस्यते-र्घञ् । विपरीतायनमितःणोऽचि विपर्ययः, परावनुपात्यय इणः (३।३।२५/३२१०) इत्यपि विपर्ययः । परित्यज्यायनं पर्ययः, परावनुपात्यय इणः (३।३।३८/३२२०) इति– उपात्यये क्रमोल्लङ्घने घञ् नास्ति । अतिक्रम्य पतनं यथा– कालातिपातः । उपपन्नस्यात्ययोऽति-क्रमणमुपात्ययः ॥ ३३ ॥ आकारणं कृत्वा यद् भृत्यानां कार्येषु विसर्जनं तत्प्रति-शासनम् । समं स्तूयतेऽस्मिश्छन्दोगैः संस्तावः, यज्ञे समि स्तुवः (३।३।३१/३२०२) इति घञ् ॥ ३४ ॥ उद्धन्यतेऽस्मिन्नुद्घनः, उद्घनोऽत्याधानम् (३।३।८०/३२५७) इति साधुः । (स्तम्बघ्नः) स्तम्बे क च (३।३।८३/३२६०) इति कः, स्तम्बस्तृणं विरुच्च । ( स्तम्बघनः) अप् च ॥ ३५ ॥ ( आविधः ) व्यधेः, घञर्थे कविधानम् ( वा० २२०४/३२३४ ) समन्ता-त्समः, समस्तुल्यारोहपरिणाहः । नियतं हन्यते निघः, निघो निमितम् (३।३।८७/३२६५) इति साधुः । ( उत्कारः ) कॄ धान्ये (३।३।३०/३२०१) इति घञ्, उन्न्योरित्यनुवृत्तेः, उन्न्योर्ग्रः । (३।३।२९/३२००) ऊर्ध्वं क्षेपो राशीकरणं वा ॥३६॥ ( निगार इ० ) निगरण-मुद्गरणं च, उन्न्योर्ग्रः (३।३।२९/३२००) इति घञ् । विक्षा वः काशे [ से ], वौ क्षुश्रुवः (३।३।२५/३२९६) इति घञ् । ( उद्ग्राहः ) उद्ग्रहणं, उदि ग्रहः (३।३।३५/३२०७) इति

३८ निष्ठ्यूतिर् निष्ठेवन-निष्ठीवनमित्यभिन्नानि ।
जवने जूतिः, सातिस् त्ववसाने स्यादथ ज्वरे जूर्तिः ॥

2 Speed.
2 Conclusion.
2 Fever.

३९ उदजस् तु पशु-प्रेरणमकरणिरित्याऽऽदयः शापे ।
गोत्राऽन्तेभ्यस् तस्य वृन्दमित्यौपगवकाऽऽदिकम् ॥

1 Driving of cattle.
1 Curse.
1 Aggregate patronymic.

४० आपूपिकं, शाष्कुलिकमेवमाद्यम-चेतसाम् ।
माणवानां तु माणव्यं, सहायानां सहायता ॥

2 Multitude of loaves and pies.
1 Multitude of boys.
1—of coadjutors.

४१ हल्या हलानां, ब्राह्मण्य-वाडव्ये तु द्विजन्मनाम् ।
द्वे पर्शुकानां पृष्ठानां पार्श्वं, पृष्ठ्यमनुक्रमात् ॥

1—of ploughs.
2—of priests.
1—of ribs and back-bones.

४२ खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम् ।
ग्रामता, जनता, धूम्या, पाश्या, गल्या, पृथक्-पृथक् ॥

2—of threshing floors.
1—of men.
1—of villages, etc.
1—of people. 1 Accumulation of smoke. 1 Abundance of fetters.
1 Abundance of reeds, ropes and throats.

---

घञ् ॥ ३७ ॥ (उपरामः) निवृत्त्यर्थे, नोदात्तोपदेशस्य मान्तस्यानाचमेः (७।३।३४ / २७६३) इति वृद्धिनिषेधो नास्ति—अनुदात्तोपदेशत्वात्, यम उपरमे इति निपातनात्तू-परमः । ( निष्ठीवनं ) ष्ठिवुसिव्योर्ल्युटि वा दीर्घः ( स. कं. २।४।१६७ ) ॥ ३८ ॥ (जूतिः) ऊतियूतिजूतिसातिहेतीति ( ३।३।९७ / ३२७४ ) साधुः, जवनमित्येके । (सातिः) षोन्तकर्मणि । ( जूर्तिः ) ज्वरत्वरस्रिव्यतीति ( ६।४।२० / २६५४ ) ऊत्वम् । ( उदजः ) समुदोरजः पशुषु ( ३।३।६९ / ३२४६ ) इत्यप्, अघञपोः ( २।४।३८ / ३२१६ ) इति वी नास्ति । न करणं (अकरणिः), यथा—अकरणिरिह भूयादप्रशस्तस्य धातुः (?) तस्याजननिरेवास्तु शिशु० ( २-४५ ), आक्रोशे नञ्यनिः ( ३।३।११२ / ३३८९ )। तथा—आक्रोशेऽवन्योर्ग्रहः ( ३।३।४५ / ३२२० ), निग्राहस्ते वृषल भूयात्, ( ? ) अवग्राहः ॥ ३९ ॥ औपगवानां समूहः (औपगवकम् )। आदिशब्दाद् गार्भकं, दाक्षकं, गोत्रोक्षोष्ट्रेति ( ४।२।३९ / १२४६ ) वुञ् । तस्य वृन्दमित्येव—आ वर्गसमाप्तेः । अपूपानां समूह आपूपिकम्, अचित्तहस्ति-धेनोष्ठक् ( ४।२।४७ / १२५६ )। आदिशब्दात्पपेटिकादिः [ वण्डकादिः ] ॥ ४० ॥ ( माणव्यं ) ब्राह्मणमाणववाडवाद्यत् ( ४।२।४२ / १२५० )। ( सहायता ) ग्रामजनबन्धु-सहायेभ्यस्तल् ( ४।२।४३ / १२५१ )। ( हल्या ) पाशादिभ्यो यः ( ४।२।४९ / १२५८ ) ॥ ४१ ॥ पर्शूनां समूहः पार्श्वम्, पर्श्वा णस् वक्तव्यः ( वा० २७२४ / १२५१ )। ( पृष्ठ्यं ) पृष्ठादुप-संख्यानात् ( वा० २७२० / १२५० ) यत्, यज्ञविषयेऽदः स्मरन्ति । ( खलिनी, इ० ) खलगोरथात् ( ४।२।५० / १२५९ ), इनित्रकट्यचश्च (४।२।५१ / १२६०) इति—इनिर्यच्च । मनुष्याणां समूहः ( मानुष्यकं ), गोत्रोक्षोष्ट्रेति ( ४।२।३९ / १२४६ ) वुञ्, प्रकृत्या अके राजन्यमनुष्य-

1--of thousands, etc. ४३ अपि साहस्र-कारीष-वार्मणाऽऽथर्वणाऽऽदिकम् ।

1 Abundance of dry cow dung. 1 Abundance of hides or shields. 1 Collection of prayers.

इति संकीर्ण-वर्गः २, अत्र मूलश्लोकाः ४२॥, क्षे० श्लो०० .

---

## अथ नानार्थ-वर्गः ३

१ नानाऽर्थाः के ऽपि कान्ताऽऽदि-वर्गेष्वेवाऽत्र कीर्तिताः ।
भूरि-प्रयोगा ये येषु पर्यायेष्वपि तेषु ते ॥

1 Sky. ether. 1 Heaven. 1 Verse. 1 Glory.

२ आकाशे त्रिदिवे नाको, लोकस् तु भुवने जने, । 1 World. 1 People.
पद्ये यशसि च श्लोकः, शरे खड्गे च सायकः, ॥ 1 Arrow. 1 Sword.

1 Shakal. 1 God of water.

३ जम्बुकौ क्रोष्टु-वरुणौ, पृथुकौ चिपिटाऽर्भकौ, ।

1 Fried rice flattened. 1 Infant.

1 Sight. look. 1 Light.

आलोकौ दर्शन-द्योतौ, भेरी-पटहमानकौ, ॥

1 A double drum. 1 A large drum.

---

युवानः ( वा० $\frac{४।२।१४}{१२४७}$ ) इति यलोपाभावः ॥ ४२ ॥ ग्रामादिसमूह एते वर्तन्ते, ग्रामजनेति ( $\frac{४।२।४३}{१२५१}$ ) तल्, पाशादिभ्यश्चेति ( $\frac{४।२।४९}{१२५८}$ ) यः, भिक्षादिभ्योऽण् ( $\frac{४।२।३८}{१२४४}$ )। पृथक्पृथगिति परस्परं पर्यायत्वाभावः । वर्मिणां समूहो वार्मणम्। आदिशब्दाच्चार्मणाङ्गारादि । वाच्यं चात्र—परभागो गुणोत्कर्षः प्रतिपत्तिः प्रगल्भता। श्रन्थनं ग्रन्थनं गुम्फः संदर्भो रचना न ना ॥ प्रणिपातस्त्वनुनयः प्रणयः सान्त्वना न ना। दवथुः परितापः स्यादनुतापो विसूरितम् ॥ क्रीडा विनोदः खेदस्तु निर्वेदश्चावसन्नता। आप्लवः प्लवनं गर्धो धनायाकूतमाशयः ॥ अङ्कपाली परिष्वङ्ग आसारं त्वासरद्धलम् । विगानं वचनीयत्वमत्याधानमतिक्रमः ॥ हानं त्यागस्तुला कक्षा क्रिया चेष्टा विकल्पनम् । वितर्कस्तर्क आलस्यं कौसीद्यमजिगीषुता (?) ॥४३॥ इति संकीर्णवर्गः । २ ।

इह तावत्कान्तखान्तादिवर्गेष्वेव नानार्थाः कीर्तिताः । तन्मध्याच्च ये केऽपि येष्वर्थेषु भूरिप्रयोगाः प्रचुरव्यवहारास्ते तत्पर्यायेष्वपि कथिता इति पौनरुक्त्यादिदोषो नोद्भावनीयः । कान्ता इतो वक्ष्यन्ते । एवं खान्तगान्तादौ द्रष्टव्यम् ॥ १ ॥ व्योम्नि स्वर्गे च नाको वर्तते, नास्त्यकमश्रेयोऽत्रेति। लोक्यते लोकः, यथा— ब्रह्मलोकः, गतानुगतिको लोकः (हितोप. १।१०)। पद्ये पदबद्धे वृत्ते, श्लोक्यते श्लोकः, श्लोकृ संघाते। स्यति— अन्तं करोति सायकः ॥ २ ॥ ( जम्बुकः ) जमु अदने। पथते वर्धते पृथुकः। चिपिट आर्द्रसस्याभ्योषः। ( आलोकः ) भावे करणे च घञ्, अवलोकनप्रकाशार्थौ ।

1 Mark. 1 Flank. ४ उत्सङ्ग-चिह्नयोरङ्कः, कलङ्को ऽङ्काऽपवादयोः, ।
1 Spot. 1 Defamation.

1 The chief of snakes. तक्षको नाग-वर्द्धक्योरर्कः स्फटिक-सूर्ययोः, ॥
1 A carpenter. 1 Crystal. 1 The sun.

1 Wind. 1 *Brahma*. ५ मारुते वेधसि ब्रध्ने पुंसि कः, कं शिरोऽम्बुनोः, ।
1 Sun. 1 Soul. 1 Head. 1 Water.

1 Shrivelled grain. 1 Brevity. स्यात् पुलाकस् तुच्छ-धान्ये संक्षेपे भक्त-सिक्थके, ॥
1 Lump of boiled rice.

1 An owl. ६ उलूके करिणः पुच्छ-मूलोपान्ते च पेचकः, ।
1 Root of a tail of an elephant.

1 Water-pot. 1 A *Buddha* or saint. कमण्डलौ च करकः, सुगते च विनायकः, ॥

1 Cubit. 2 A span. 1 A Scorpion. ७ किष्कुर् हस्ते वितस्तौ च, शूक—कीटे च वृश्चिकः, ।

1 An integrant part. 2 Contrary. प्रतिकूले प्रतीकस् त्रिष्वेक-देशे तु पुंस्ययम्, ॥

1 Gentiana. 1 A fragrant grass. ८ स्याद् भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणे ऽपि च, ।
1 Another sort. 1 Andropogon schoenanthus.

1 Moon light night. ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले ॥
1 Sorts of Cucurbitaceous plants. 1 Kayaphal.

A white sort of Mimosa. ९ सिते च खदिरे सोमवल्कः स्यादथ सिह्लके ।

1 Incense. 1 Meal of seame. तिल-कल्के च पिण्याको, बाह्लीकं रामठे ऽपि च, ॥ Asafœtida.

---

अन्तस्तन्त्रीका ढक्का भेरी। पटहो दुन्दुभिः, समन्तादणत्याणकः ॥ ३ ॥ अमन्त्यस्मिन्बालादय इत्यङ्कः, अङ्क्यतेऽनेन च, अकि, लक्षणे, यथा मृगाङ्कः। कल्यते क्षिप्यते कलङ्कः। अङ्कोऽत्र चिह्नम्। नागो नागविशेषः। वर्धकिस्तक्षा। अर्च्यतेऽर्कः वृक्षेऽपि ॥ ४ ॥ आत्मन्यपि कः।॰ कं सुखेपि च, कायति काम्यते कचति ( ते ) वा। पुलं विस्तारम कति पुलाकः, यथा– पुलाका इव धान्येषु ( मनु १०–१२५ )। संक्षेपे क्षिप्रे, यथा– पुलाककारी विपुलाशयः स्यात् ( ? )। सिक्थे, यथा– स्थालीपुलाकन्यायेन ( ? ) ॥ ५ ॥ ( पेचकः ) पिचि गतौ पचिर्वा। ( करकः ) चशब्दाद्वर्षोपले दाडिमे च, कृ विक्षेपे। ( विनायकः ) चशब्दाद् गणपतौ धर्मराजे च विनेतृत्वात् ॥ ६ ॥ कीयते ज्ञायतेऽनेन किष्कुः, चतुर्विंशत्यङ्गुलं द्वादशाङ्गुलं च मानम्। वृश्चतीति ( वृश्चिकः ) शूकवान्कीटः कण्टकी च कृमिः। चाद्राशौ मदन्तिकायां च ( वृश्चिकः )। प्रतीपमेति प्रतीकः। एकदेशोऽशः, यथा सप्रतीकः श्लोकः। द्वीपेऽपि ( प्रतीकः ) ॥ ७ ॥ एते वनौषधिवर्गे व्याख्याताः। तथा भूनिम्बः किराततिक्तकः। कट्फलः श्रीपर्णी। भूस्तृणं छत्त्रा। यवान्यां च (भूतिकं)। ज्योत्स्निका पटोलिका। घोषोऽपामार्गः ॥ ८ ॥ पीड्यते पिण्याकः। बाह्लीकमित्येके।

1 INDRA. 1 Bdellium. — १० महेन्द्र-गुग्गुलूलूक-व्यालग्राहिषु कौशिकः, । — 1 Owl. 1 Snake-catcher.

1 Disease. 1 Pain. 1 Fear. 1 Small. — रुक्-ताप-शङ्कास्वातङ्कः, स्वल्पे ऽपि क्षुल्लकस् त्रिषु, ॥

1 The moon. 1 Long lived. — ११ जैवातृकः शशाङ्के ऽपि खुरे ऽप्यश्वस्य वर्तकः, । — A horse's hoof. 1 A quail.

1 A leopard. 1 An aromatic seed. — व्याघ्रे ऽपि पुण्डरीको ना, यवान्यामपि दीपकः, ॥ — 1 An elephant to uphold the world.

1 Ape. 1 Shakal. 1 Dog. — १२ शालावृकाः कपि-क्रोष्टु-श्वानः, स्वर्णे ऽपि गैरिकम्, । — 1 Gold. 1 Red chalk.

1 Pain. 1 Falsehood. — पीडाऽर्थेऽपि व्यलीकं स्यादलीकं त्वप्रिये ऽनृते, ॥ — 1 Any thing displeasing.

1 Disposition. 1 Race; family. — १३ शीलाऽन्वयावनूके द्वे, शल्के शकल-वल्कले, । — 1 Part. 1 Scale of a fish. 1 Bark.

1 A weight. 1 Gold. — साऽष्टे शते सुवर्णानां हेम्न्युरो-भूषणे पले ॥ — 1 Ornament on the breast.

1 Dirt 1 Sin. 1 Calamity. — १४ दीनारे ऽपि च निष्को ऽस्त्री, कल्को ऽस्त्री शमलैनसोः ।

1 Fraud. — दम्भे ऽप्यथ पिनाको ऽस्त्री शूल-शङ्करधन्वनोः, ॥ — 1 Trident. 1 SIVA's bow.

---

अपिशब्दाद्वह्लीकदेशोत्पन्नेऽश्वादौ हिङ्गौकुङ्कुमे च ॥ ९ ॥ कुशिकस्यापत्यं, कोशो व-प्रयोजनमस्य कौशिकः । ( आतङ्कः ) तकि कृच्छ्रजीवने । स्वल्पः खलः । अपिशब्दा दरिद्रे कनिष्ठेऽपि, क्षोदः क्षुत्– क्षुदं क्षुधं च लाति क्षुल्लकः ॥ १० ॥ जीवेरातृकन्वृद्धिश्च ( उ० ७९ ) । अपिशब्दादायुष्मति ( जैवातृकः ) । अपिशब्दात्पक्षिविशेषे ( वर्तकः ( पुण्डरीकः ) पुणेः पुण्डेश्च रूपम् । अपिशब्दाद्दिग्गजे, सिताम्बुजसितच्छत्त्रयोस्तु नपुंसकं ( पुण्डरीकम् ) । यवान्यजमोदा । अदिशब्दाद्दीपेऽलंकारे जीरकेऽपि (दीपकः) ॥ ११ ॥ स्यन्ति साला आवृण्वन्ति (सालावृकाः) । धातुविशेषेऽपिशब्दात् (गैरिकं), गिरौ भवं गैरिकं, गिरिणा विग्रहो गिरिकात्प्रत्ययोऽध्यविकन्यायेन । अपिशब्दादप्रिया कार्यविलक्षविपर्ययेषु ( व्यलीकं ) । कामजेऽपराधेऽपि, विशेषेणालीकं, व्यलीकमपि च व्यङ्गमिति च माला । अल्यते वार्यतेऽलीकं न लीयते वा, अलीकमहितं विदुरिति कात्यः । ( अलीकं ) ललाटेऽप्याहुः ॥ १२ ॥ अनूच्यति समवैत्यनूकं, उच समवाये, न्यङ्क्वादिः ( ७।३।५३ / २८६४ ) । द्वे इत्येव, शलति पृथग्भवति शल्कं खण्डः । वल्कलं वार्क्षी त्वक् । सहाष्टाभिर्वर्तते साष्टं, बहुव्रीहौ संख्येये डजबहुगणात् ( ५।४।७३ / ८५१ ) । सुवर्णं षोडश माषकाः । पलं सुवर्णाश्चत्वारः । दीनैरर्यते दीनारं रूपकम् । निःशेषेण काम्यते निष्कः, आकर्षोऽपि ॥ १३ ॥ कल्यते कल्कं द्रवाधश्चूर्णं विनीयाख्यं, शमलं विष्ठेत्येके । एनः पापं, यथा–तपो न कल्कोऽध्ययनं न कल्कः (?) । अपिनह्यते पिनाकं

2 Sometimes.
5 Together with.
1 Conformity.
2 In vain.

४ कदाचिज् जातु, सार्धं तु साकं सत्रा समं सह ।
आनुकूल्याऽर्थकं प्राध्वं, व्यर्थके तु वृथा मुधा ॥

6 Either, or (indicating deliberation).
6 Expletives.

५ आहो उताहो किमुत विकल्पे किं किमूत च ।
तु हि च स्म ह वै पाद-पूरणे, पूजने स्वति ॥

2 Particles of praise and reverence.

2 By day.
2 By night.
2 Crooked, bent; awry.

६ दिवा ऽह्नीत्यथ दोषा च नक्तं च रजनाविति ।
तिर्यगर्थे साचि तिरोऽप्यथ संबोधनाऽर्थकाः ॥

6 Vocative particles.
1 Near. 2 Midst.
1 Inconsiderately, suddenly.

७ स्युः प्याट् पाडङ्ग हे है भोः, समया निकषा हिरुक् ।
अ-तर्किते तु सहसा, स्यात् पुरः पुरतो ऽग्रतः ॥

3 Before, in front.

---

चित्–कथंचित् ॥ ३ ॥ अन्योन्यपर्यायावेतौ–कदाचिच्छूरतां याति मरणे कृतनिश्चयः (?), न जातु कामः कामानाभुपभोगेन शाम्यति ( मनुः २–९४ ) ॥ सार्धं धनैर्महान् । पुत्रेण साकं याति । सत्रा कलत्रैर्गार्हस्थ्यम् (?) । भ्रात्रा समं युध्यते । पुत्रैः सहास्ते । सङ्गो द्विजिह्वैः सजूरिति (स. कं. पृ. ३७) सजूर्गतिप्रतिरूपको निपातः । प्राध्वं कुरुध्वं बुधाः ( स. कं. पृ. ५४ ), प्राध्वं बन्धने (१।४।७८/७७।७९) इति गतिसंज्ञा–प्राध्वंकृत्य ( स. कं. पृ. ५४ ) । वृथा दुग्धोऽनड्वान् । मुग्धे, मुधा ताम्यसि ( मु. रा. ३–१ ) ॥ ४ ॥ विकल्पः पक्षान्तरं—स्थाणुराहो पुरुषः ( स. कं. पृ. ३५ ), उताहोस्विद् भवेद्राजा नलः परपुरंजयः, ( म. भा. नलो. ? ) । किमुत रज्जुः किमुत सर्पः [ किं रज्जुः किं सर्पः ], किमु खेदयेत्किमु मानयेत्, एकमेव वरं पुंसामुत राज्यमुताश्रमः (?) । आख्यामि तु तत्त्वं ते (?) । न हि न हि महिमानं प्राप्य तुष्यन्ति भूपाः ( ? ) । भीमः पार्थस्तथैव च । इति ह स्माहुराचार्याः ( स. कं. पृ. ३७ ) । यो वै युवाप्यधीयानः ( मनु. २-१५६ ) । खल्वादयोऽपि–अहो न (नु) खलु भोः ( स. कं. पृ. ३३ ) । पूजने–सुस्तुतं, अतिस्तुतम् ॥ ५ ॥ दिवातनं, इति शब्देन सप्तम्यन्ते दिनार्थेऽयमिति द्योत्यते । अग्रेऽप्येवम् । दोषामन्यमहः । नक्तंचरः । तथा–उषापि–उषातनो वायुः ॥ ६ ॥ साचि लोचनयुगं नमयन्ती ( कि. ९-४४ ) । तिरः काष्ठं कुरु ( स. कं. पृ. ५९ ) । प्याट् पाठकाः । पाट् पान्थाः । अङ्गानङ्ग, इष्टाह्वाने चैतत् । हे चैत्र । है वातूल । भो भार्गव । हंहो, अरेरे, अयि–हंहो काम, रे चोर, अरे चेट, अयि प्रिये । एते समीपार्थेऽन्योन्यं पर्यायाः–समया ग्रामं, लङ्कां निकषा हनिष्यति ( शिशु० १-६८ ) सभ्यान् हिरुक्

| | |
|---|---|
| 4 Oblations to the gods. | ८ स्वाहा देव-हविर्-दाने श्रौषट् वौषट् वषट्, स्वधा । |
| | 1 —to manes. |
| 3 A little.<br>2 In the next life. | किञ्चिदीषन् मनागल्पे, प्रेत्याऽमुत्र भवाऽन्तरे ॥ |
| 6 As, like. 2 Ah! (indicating surprise).<br>2 Silently.<br>2 Instantly. | ९ व वा यथा तथैवैवं साम्ये, ऽहो हीति विस्मये ।<br>मौने तु तूष्णीं तूष्णीकां, सद्यः सपदि तत्-क्षणे ॥ |
| 2 Indication of joy.<br>3 Between; amidst.<br>1 Forcibly, violently. | १० दिष्ट्या समुपजोषं चेत्यानन्दे, ऽथा ऽन्तरे ऽन्तरा ।<br>अन्तरेण च मध्ये स्युः, प्रसह्य तु हठाऽर्थकम् ॥ |
| 2 Properly. | ११ युक्ते द्वे सांप्रतं स्थाने, ऽभीक्ष्णं शश्वदनारते । |
| | 2 Continually, perpetually. |
| 4 No, not. | अ-भावे नह्य नो नाऽपि, मा स्म मा ऽलं च वारणे ॥ |
| | 3 Negative and prohibitive. |
| 2 If.<br>2 Truly.<br>2 Apparent.<br>3 Yes. | १२ पक्षाऽन्तरे चेद् यदि च, तत्त्वे त्वद्धा-ऽञ्जसा द्वयम् ।<br>प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ॥ |

---

( स. क. पृ. ३७ ) ॥ ७ ॥ सहसा विदधीत न क्रियाम् ( किरातार्जु० २–३० )। अग्रार्था एते–पुरःसरः । नासीरधूलिधवलाः पुरतः प्रयान्ति ( ? ) । अग्रतो धावति श्रीः ( ? ) ॥ ८ ॥ सोमाय स्वाहा । अस्तु श्रौषट् । व्रीहीं वौषट् । वषडिन्द्राय । पितृभ्यः स्वधा ( वाज. सं. २-७ ) । किंचित्कुञ्चितमूर्धजाः । ईषत्स्मेरः । ब्रूते मनाक्समार्दवम् । अन्यो धनं प्रेत्य गतस्य भुङ्क्ते ( ? ) । अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ( ? ) ॥ ९ ॥ पचतीति [स्रवन्ती] वत् । पद्मिनीं [ नी ] वान्यरूपां[पा] ( मेघ० २–८० ) । यथा चैत्रस्तथा मैत्रः । शारदाभ्रमिव पेलवमायुः ( ? ) । यथार्क एवं कर्णः । अहो आश्चर्यम् । हतविधिलल्लि( सि )तानां ही विचित्रो विपाकः (शिशु० ११–६४) । मुनिस्तूष्णीमास्ते । अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः ( वा० ? ) इत्यज्ञाताद्यर्थे विशिष्टे मौने तूष्णीकां, मौनमात्रे तूष्णीम् । सद्यः पतति मांसेन (?) । सपदि प्रदहत्युपेक्षितोऽग्निः (?) ॥ १० ॥ दिष्ट्या पुत्रो जातः । समुपजोषं वर्तते । आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ( महानाट० ५. २५. ) । अन्तरा त्वां च मां च कमण्डलुः ( स. कं. पृ. ५८ ) । यतो भवन्तमन्तरेणान्यथा भूपतिर्ग्राहितः (?), भवन्मध्येनेत्यर्थः । प्रसह्य वित्तानि हरन्ति चौराः ( नी. श. २-५४ ) ॥ ११ ॥ न सांप्रतं यतः स्त्री नेत्री । हन्त स्थाने प्रश्नः । अभीक्ष्णं वक्ति । शश्वद्याति, अविरतमित्यर्थः । न हि प्रेम प्रयोजनापेक्षम् ( ? ) । अविप्र इव भाषसे, विप्रवन्न ब्रूषे इत्यर्थः । नो जानीमः । नैकः सुप्तेषु जागृयात्

4 Every way; all around.
1 Willingly.
1 Be it so. 2 Indeed.
1 Indicating contradiction.
2 Improperly; unseasonably.
2 Falsely.
5 Properly, suitably.
1 Before; anterior.
1 A year.
2 Former, prior.
1 Little; low.
1 Great; high, load.
1 Perpetually, ever.
1 External; out.

१३ समन्ततस् तु परितः सर्वतो विष्वगित्यपि ।
अ-कामाऽनुमतौ काममसूयोपगमेऽस्तु च ॥
१४ ननु च स्याद् विरोधोक्तौ, कच्चित् काम-प्रवेदने ।
1 Introductory of a kind question.
निष्षमं दुष्षमं गर्ह्ये, यथास्वं तु यथायथम् ॥
2 As thereto appertaining.
१५ मृषा मिथ्या च वितथे, यथार्थं तु यथातथम् ।
स्युरेवं तु पुनर् वै वेत्यवधारण-वाचकाः ॥ 2 Indeed.
१६ प्रागतीताऽर्थकं, नूनमवश्यं निश्चये द्वयम् । 2 Certainly; necessarily.
संवद् वर्षे, ऽवरे त्वर्वागामेवं, स्वयमात्मना ॥
1 Assent, consent, promise. 1 Self; or himself.
१७ अल्पे नीचैर्, महत्युच्चैः, प्रायो भूम्न्य-द्रुते शनैः ।
1 Frequently; generally. 1 Slowly.
सना नित्ये, बहिर् बाह्ये, स्मा ऽतीते, ऽस्तम-दर्शने ॥
1 Formerly. 1 Disappearance.

---

( ? )। मास्म करोः । मा कार्षीः । अलं बाले रोदनेन ॥ १२ ॥ सन्तश्चेदमृतेन किम् ( राजशे. बा. रा. २ )। यदि खलास्तत्कालकूटं मृषा ( रा. शे. बा. रा. २ )। अरे अद्धा पुरुषः । अञ्जसा वक्ति साधुः ( स. कं. ५२ )। प्रादुरासीत् । आविर्भूतः । मतमभ्युपगमः–ओं कुरु, एवं कुरु, परमं तत्रावसम् । एवं बाढमित्यादि च ॥ १३ ॥ एते सर्वतोदिकार्थे–समन्ततो धावति, परितः प्रपतन्ति दुष्कृतां (तो) विपदः, सर्वतः संपदः सताम्, विष्वगञ्चति विष्वद्र्यङ् । इतिशब्दात्समन्तादित्यादि– समन्ताद्भवः सामन्तः । आदावनिच्छायां पश्चादङ्गीकारे–कामं करोमि । अस्तुशब्दोऽसूयापूर्वेऽङ्गीकारे–अस्तुकारः, एवमस्तु को दोषः । चशब्दाद्भवतु नाम ॥ १४ ॥ ननु च कः शब्दः । कामप्रवेदनमिष्टपरिप्रश्नः–कच्चिज्जीवति मे माता ( स. कं. ५२ )। निष्क्रान्ताः समा दुष्टाः समा वत्सरा अत्रेति, तिष्ठद्गुप्रभृतीनि च ($\frac{2|1|17}{6|7|1}$) इत्यव्ययीभावादव्ययत्वम्, गर्हामात्रे तूपचारात्, समेन समासो वा–निःषमं वक्ति मूर्खः (?), कालानुचितमित्यर्थः । एवं दुःषमं वर्तते (?) । सर्वेषां तु यथायथम्, यथास्वी [स्मी]यमित्यर्थः, यथास्वे यथायथमिति ($\frac{8|1|14}{2|1|46}$) साधुः ॥ १५ ॥ मृषोद्यम् ( उ० रा० ४, ८ )। मिथ्यावादी । तथेति सत्यमनतिक्रम्य–यथातथं वक्ति सभासु विद्वान् (?) । एवमेतत् । आत्मा सर्वं तु पश्यति ( ? ) । विप्रः पुनः पूज्यः । गुरुर्वा वक्ति भीष्मो वा । त्वमेव देव सर्वं जानासि (?) ॥१६॥ प्राक् कृतम् । नूनं हन्तास्मि रावणम् (?) । अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः (भर्तृहरि० ?) । संवत्सरः,

1 Present; now, being. 1 Interjection, expressive of wrath. 1 Interrogative particle. 1 Encouraging vocative.
1 Particle indicating reflection.

१८ अस्ति सत्त्वे, रुषोक्तावु, ऊं प्रश्ने, ऽनुनये त्वयि ।
हुं तर्के स्यादुषा रात्रेरवसाने, नमो नतौ ॥

1 Close of the night; morn, break of day. 1 Hail! salutation; bow.

1 Again. 1 Ill.
1 Well.
1 Evening, close of the day.

१९ पुनरर्थे ऽङ्ग, निन्दायां दुष्टु, सुष्टु प्रशंसने ।
सायं साये, प्रगे प्रातः प्रभाते, निकषा ऽन्तिके ॥

2 Morning. 1 Near.

1 Favourably.
1 Well (showing remembrance).

अमाऽनुगुण्ये, स्मरणे हुं, फड् विघ्ननिराकृतौ ।

Oh (to remove spells etc.)

1 Accepingly.
2 Callingly.

अङ्गीकृतौ स्यादर्थे हूं हीनसंबोधते त्वरे ॥१॥ 3 Hastily.

1 Last year; penult, and present years.
1 To-day.

२० परुत् परार्यैषमो ऽब्दे पूर्वे, पूर्वतरे, यति ।
अद्याऽत्राऽह्न्यथ पूर्वे ऽह्नीत्यादौ पूर्वोत्तराऽपरात् ॥

2 A former day, etc.

1 Yesterday.
1 Both days.
1 Next day.

२१ तथा ऽधराऽन्याऽन्यतरेतरात् पूर्वेद्युराऽऽदयः ।
उभयद्युश् चोभयेद्युः, परे त्वह्नि परेद्यवि ॥

---

संवत्तृतीये । अवरः पारादन्यः–वर्षात्पोसशादर्वाक्, अर्वाक्कालीनः । अङ्गीकारार्थे–आं कुर्मः, एवं कुर्मः । स्वयंभूः, आत्मनेति तृतीयान्तार्थे ॥१७॥ नीचैर्मरुद्वाति (?) । उच्चैरुच्चरितुं चिरम् (?)। सन्तः प्रायो विवेक्तारः (?), भूम्नि बाहुल्यार्थे । अशीघ्रार्थे–शनैर्याति पिपीलिका (सु० भा० २५४)। क्रमेऽपि (शनैः) अद्रुतार्थान्वयात्–शनैः शनैर्व्युपरमेत् ( भ. गी. ६-२५ ) । सनातनः । सनत्सनाच्च–सनत्कुमारः, सनात्कुमारश्च । बहिर्भूतः । वक्ति स्म व्यासः ( ? ), अवोचदित्यर्थः । अस्तं गतः ॥ १८ ॥ अस्तिक्षीरा स्त्री, अस्ति परलोके मतिरस्यास्तिकः । कोपनोक्तौ–उं सैवास्मि तव प्रिया ( ? ) । रुषेत्येव–ऊं न जानासि स्वार्थम् । अप्ययि साहसकारिणि ( ? ) । स्याद्वादिनो जैनाः उषातनो वायुः । नमो देवेभ्यः ॥ १९ ॥ मूर्खोऽपि नावमन्तव्यः किमङ्ग विद्वान् ( स. कं. पृ. ३५ ) । दुष्टुवादी खलः । सुष्टूक्तम् । सीयते क्षीयते सायो निशामुखं, घञ्–सायंतनो वायुः, सायमासीनः संध्यां वन्देत (?) । प्रगेतनो वायुः । प्रातः संध्यामुपासीत ( ? )। मित्रं निकषास्ते ॥ २० ॥ पूर्वे वर्षे परुत् । पूर्वतरे वर्षे परारि । यति गच्छति वर्तमाने वर्षे–ऐषमः, सद्यःपरुत्परार्यैषम इति ( $\frac{५।३।२२}{११७०}$ ) साधवः । एवमग्रिमाः । अस्मिन्नहन्यद्य, वर्तमानतामात्रेप्याहुः–नरो लोकेऽद्य दुर्लभः (बलः) (?), तदद्यत्वेन तथा । पूर्वेऽह्नि पूर्वेद्युः । आदिशब्दादुत्तरेद्युः, अधरेद्युः, अपरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युः । द्युर्दिनमिति श्रीभोजः,

२२ ह्यो गते, ऽनागते ऽह्नि श्वः, परश्वस् तु परे ऽहनि ।

1 Yesterday. 1 Tomorrow. 1 The day after to-morrow.

तदा तदानीं, युगपदेकदा, सर्वदा सदा ॥

2 Then, at that time. 2 At once; at the same time. 2 Always; at all times.

२३ एतर्हि संप्रतीऽदानीमधुना सांप्रतं तथा ।

दिग्-देश-काले पूर्वाऽऽदौ प्रागुदक्--प्रत्यगाऽऽदयः ॥

5 Now; at this time. 1 East, North, West, etc.

इत्यव्यय-वर्गः ४, अत्र मूलश्लोकाः २३, क्षे० श्लो० १.

---

## अथ लिङ्गाऽऽदि-संग्रह-वर्गः ५

१ स-लिङ्ग-शास्त्रैः सन्नाऽऽदि-कृत्-तद्धित-समास-जैः ।

अनुक्तैः संग्रहे लिङ्गं संकीर्ण-वदिहोन्नयेत्. ॥

---

यथा—द्युश्चन्द्रो द्योतते कथम् (?) ॥२१॥ उभयोरह्नोः—उभयेद्युः, उभयद्युः, द्युश्चोभयद्वक्तव्यः (वा० ३२५१ / १९७०)। स्मार्तै—पक्षिणीयं रात्रिरुदिता । तं हन्तास्मि परेद्यवि (?) ॥ २२ ॥ अतीतेऽह्नि ह्यः—ह्योऽकरोत् । आनागतोऽह्नि श्वः—श्वो गन्ता । श्वोदिनात्परमहः परःश्वः, पारस्करादित्वात् ( ५।३।२२ / १९६८ ) परःसहस्रादिवत्सुट् । तस्मिन्काले तदा, तदो दा चेति (३।१।१५७ / १०७१) तदा, तदानीं च । एतौ तुल्यकालार्थौ । युगपत्प्रासाः । एकस्मिन्काले—एकदा मिलन्ति । एकपदे च—अयमेकपदे तया वियोगः ( विक्रमोर्वशी० ४-३ ) । सर्वस्मिन्कालेऽर्थे, सर्वैकान्यकिंयत्तदःकाले दा (५।३।१५ / १९६४), सर्वस्य सोऽन्यतरस्यां दि (५।३।६ / १९५२) ॥ २३ ॥ अस्मिन्कालेऽर्थे, इदमो र्हिल् ( ५।३।१६ / १९६५ ), एतेतौ रथोः ( ५।३।४ / १९५० ) इत्येतादेशः, ( एतर्हि )—भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेव वर्त्मनि ( कि. १-३२ ), अधुना, इदानीं च । संप्रत्येव सांप्रतं, स्वार्थेऽण् । प्राच्यां दिशि प्राचि देशे काले वा—प्राग्वसति । प्राच्या दिशः प्राचो देशात्कालाद्वा—प्रागागतः । प्राची दिक् प्राङ् देशः कालो वा—प्राग्रम्यम् । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ( ५।३।२७ / १९७४ ), अञ्चेर्लुक् ( ५।३।३० / १९८० )। आदिशब्दादुदगवागादि । एवं पूर्वादिभ्यः पुरस्तादधस्तादादि ॥ २४ ॥ इत्यव्ययवर्गः ॥ ४ ॥

---

इह लिङ्गसंग्रहवर्गे वक्ष्यमाणलिङ्गानुशासनसहितैः सुब्धातुवृत्त्यादिजातै ( शब्दैः ) प्रागनुक्तैर्लिङ्गमुन्नयेदूहेत । लक्षणेन तत्त्वतो ज्ञानार्थं सन्नाद्युपादानम् । लिङ्गशास्त्रेण यथा—स्त्रियामीदूद्विरामैकाच् । सुब्धातुवृत्तिजैर्यथा—अ प्रत्ययात्

The following are feminine, viz.
(*a*) Monosyllables in ई or ऊ.

२ लिङ्ग-शेष-विधिर् व्यापी विशेषैर् यद्य-बाधितः, ।
स्त्रियामीदूद्-विरामैकाऽच्, स-योनि-प्राणि-नाम च, ॥

(2) Names of female beings.

(*b*) Terms signifying lightning, night, creeper, Lute, Quarter, earth, river, modesty.

३ नाम विद्युन्-निशा-वल्ली-वीणा-दिग्-भू-नदी-ह्रियाम्, ।

(*c*) A compound in अ with a numeral.

अदन्तैर् द्विगुरेकाऽर्थो, न स पात्र-युगाऽऽदिभिः, ॥

(2) Except those ending in पात्र of युग.

---

(३।३।१०२/३२७९), ण्यासश्रन्थो युच् (३।३।१०७/३२८४)। कृद्वृत्तिजैर्यथा–स्त्रियां क्तिन् (३।३।९४/३२७२), पुंसि संज्ञायां घः प्रायेण (३।३।११८/३२९६), नपुंसके भावे क्तः (३।३।११४/३०९०)। गोबलीवर्दन्यायेनात्र सुब्धातुवृत्तिवर्जं कृद्वृत्तिरुदाहार्या। तद्धितवृत्तिजैर्यथा–तर्क्रीडायां प्रहरणं चेन्मौष्टादि। समासवृत्तिजैर्यथा–अदन्तैर्द्विगुरेकार्थ इत्यादि। कथमुन्नयेदित्याह–प्रागुक्तसंकीर्णवर्गवत्, वचनमात्रेणेत्यर्थः। उक्तं च प्राक्–प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् (पृ. २६०)। प्रकृत्या यथा–अर्धर्चाःपुंसि च (२।४।३१/८१६)। प्रत्ययेन यथा–स्त्रियां क्तिन् (३।३।९४/३२७२)। अर्थद्वारेण च यथा–मातृस्वस्रादीनाम्। आद्यशब्दात्क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्येति। तथा–अर्थस्य नित्यसमासवचनं सर्वलिङ्गता चेत्यादि ॥ १ ॥ अयं लिङ्गानां प्रागुक्तानां शेषविधिसंज्ञो वर्ग उत्सर्गत्वाद् व्यापको भवत्यपवादैर्यद्यबाधितः स्यात्। यथा–असन्नन्ता अबाधिताः पुंसि, तथा त्रान्तं सलोपधं शिष्टमिति, यथा–चन्द्रमाः, पुरूरवाः, सविमा प्रसवः, भरिमा कल्पः। अत्रापवादः–द्व्यच्कमसिसुसन्नतं तृतीये–इदं यशः, तेजः, नाम, धाम। ईदन्तमूदन्तं चैकस्वरं स्त्रीलिङ्गं भवति–इयं स्त्री, श्रीः, धीः, ह्रीः; भ्रूः, भूः, स्रूः, द्रूः, जूः। पुंलिङ्गात्प्राक् स्त्रियामित्यधिकारोऽयम्। स्त्रीध्वजयुक्तानां प्राणिनां संज्ञा च स्त्रियाम्, यथा–इयं माता, स्वसा, प्रसूः, योषित्, इयं गौः सुरभिः, इयं कपिर्वानरी, इयमहिर्भुजंगी, इयं करेणुर्हस्तिनी। दारादौ तु स्त्रीत्वं पुंभूम्नि दाराः (पृ. १३४) इत्याद्यपवादाद्बाध्यते। एवं सर्वत्रोन्नेयम् ॥२॥ एषां नामपर्यायाः स्त्रियाम्–इयं विद्युत्तडिदशनिः, इयं निशा रात्रिः, इयं वल्ली वीरुत्, इयं वीणा परिवादिनी, इयं दिक् ककुप्, इयं भूः कुः, इयं नदी सरित्, इयं ह्रीर्लज्जा। अकारान्तैः शब्दैः सहैकार्थः समाहारो यो द्विगुः स स्त्रियां, यदिष्टिः–अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते, (यथा) त्रयाणां लोकानां समाहारस्त्रिलोकी, पञ्चमूलीशृतं

(*d*) A noun ending in the affixes तल् Showing Multitude ; in य, इति, कठ्यत्, त्र; वुन् (Expressing group).    ४ तल्-वृन्दे येनि-कठ्य-त्रा,वैर-मैथुनिकाऽऽदि-वुन्, ।

(*e*) Or in अनि,    स्त्री-भावाऽऽदावनि-क्तिण्-ण्वुल्-णच्-ण्वुच्-क्यब्-युजिञङ्-
(imprecation). 2 क्तिन् (abstract idea). 3 ण्वुल् (disease).    नि-शाः, ॥
4 णच् (reciprocity). 5 वुच् (state).
6 क्यप् ( या )-abstract sense. 7 युज् ( अना )-abstract sense. 8 इञ् ( इ )-question and reply. 9 अङ् ( अ-आ )-abstract sense. 10 नि–abstract import. 11 शा ( आ )-abstract sense.

पथः। स द्विगुः पात्राद्युत्तरपदैरदन्तैर्न स्त्रियां, पात्रादिभ्यः प्रतिषेध इति (पात्राद्यन्तस्य न), अतः स नपुंसकमिति क्लीबे–पञ्चपात्रं, चतुर्युगं, त्रिभुवनं, त्रिपुरं, भाष्ये तु त्रिपुरी ॥ ३ ॥ तल्प्रत्ययान्ताः स्त्रियां, तस्य भावस्त्वतलौ ( $\frac{५।१।११९}{१७८१}$ )–गोर्भावो गोता, अश्वता । ग्रामजनबन्धुसहायेभ्यस्तल् ( $\frac{४।२।४३}{१२५१}$ )–ग्रामाणां समूहो ग्रामता, जनता। देवात्तल् ( $\frac{५।४।२७}{२०९५}$ )–देव एव देवता। समूहे यादिप्रत्ययान्ताः स्त्रियां पाशादेर्यत् (यः) पाशादिभ्यो यः ( $\frac{४।२।४९}{१२५८}$ )–पाशानां समूहः पाश्या। खलगोरथात् ( $\frac{४।२।५०}{१२५९}$ ) यत् ( यः ), इनित्रकठ्यचश्च ( $\frac{४।२।५१}{१२६०}$ ) चकाराद्यत् ( यः )–खलिनी, गोत्रा, रथकठ्या। वैराद्यर्थे वुन्नन्तः स्त्रियां द्वन्द्वाद्वुन्वैरमैथुनिकयोः ( $\frac{४।३।१२५}{१५०५}$ )–अश्वमहिषयोर्वैरमश्वमहिषिका, काकोलूकिका । अत्रिभरद्वाजयोर्मैथुनप्रयोजने विवाहे वैरमत्रिभरद्वाजिका, वशिष्ठकुशिका । आदिशब्दात् पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ( $\frac{५।४।१}{२०७३}$ ), दण्डव्यवसर्गयोश्च ( $\frac{५।४।२}{२०७४}$ )–द्वौ द्वौ पादौ द्विपदिकां ददाति, द्वे द्वे शते दण्डितो द्विशतिकां ददाति। उपलक्षणत्वाद् वुञन्तोऽपि, द्वन्द्वमनोज्ञादिभ्यश्च ( $\frac{५।१।१३३}{१७९८}$ ) इति वुञ्–शैष्योपाध्यायिका। गोत्रचरणाच्छ्लाघादौ वुञ् ( $\frac{५।१।१३४}{१७९९}$ )–गार्ग्यस्य भावः कर्म चेति गार्गिकया श्लाघते, काठिकया श्लाघते। स्त्रियामित्यधिकृत्य भावे वा कर्तरि च कारके–अन्यादिप्रत्ययान्ताः स्त्रियाम्, आक्रोशे नञ्यनिः ( $\frac{३।३।११२}{३२८९}$ )–अजननिस्ते वृषल भूयात् (?) अकरणिः। स्त्रियां क्तिन् ( $\frac{३।३।९४}{३२७२}$ )–कृतिः, भाक्तिः। रोगाख्यायां ण्वुल्बहुलम् ( $\frac{३।३।१३३}{३२८५}$ )–प्रवाहिका, विपादिका। धात्वर्थनिर्देशे ण्वुल् वक्तव्यः (वा० $\frac{२२२५}{३२८५}$ )–कारिका, जीविका। कर्मव्यतिहारे णच् स्त्रियाम् ( $\frac{३।३।४३}{३२९५}$ )–अन्योन्यं व्यावक्रोशनं व्यावक्रोशी वर्तते, व्यावभाषी [ हासी ], णचःस्त्रियामञ् ( $\frac{५।४।१४}{३२२६}$ ) स्वार्थे। पर्यायार्हणोत्पत्तिषु ण्वुच् ( $\frac{३।३।१११}{३२८८}$ )–भवतः शायिका, इक्षुभक्षिकोत्पन्ना। व्रजयजोर्भावे क्यप् ( $\frac{३।३।९८}{३२७५}$ )–व्रज्या, इज्या। संज्ञायां समजेति ( $\frac{३।३।९९}{३२७६}$ )–क्यप्–समज्या, निषद्या। हनस्त च ( $\frac{३।३।१०८}{२८५६}$ )–इति क्यप्–ब्रह्महत्या। ण्यासश्रन्थो युच् ( $\frac{३।३।१०७}{३२८४}$ )–मण्डना, आसना। प्रश्नाख्यानयोरिञ् (स. कं. ३-१-२४७)–कां कारिमकार्षीः, इमां कारिमकार्षम्। षिद्भिदादिभ्योऽङ् ( $\frac{३।३।१०४}{३२८१}$ )–

(*f*) Or in certain *unádi* affixes. (1) नि, ऊ, ई.

५ उणाऽऽदिषु निरूरीश् च, ङ्याबूङन्तं चलं स्थिरम्, ।

(*g*) Or in a feminine termination.

(*h*) Or in ण etc. indicating a weapon at play.

तत् क्रीडायां प्रहरणं चेन्, मौष्टा पाल्लवा ण-दिक्, ॥

1 Boxing. 2 Playing at fisty cuff.

(*i*) Or in ञ following घञ्. implying place, time, circumstance.

६ घञो ञः सा क्रिया ऽस्यां चेद्, दाण्डपाता हि फाल्गुनी, ।

Stick-flowing festival.

1 Flying along like an eagle.

श्यैनम्पाता च मृगया, तैलम्पाता स्वधेति दिक्, ॥

(1) Oil throwing.

(*j*) Diminutives. Formed by giving the feminine termination to a masculine noun.

७ स्त्री स्यात् काचिन् मृणाल्याऽऽदिर् विवक्षाऽपचये यदि, ।

(1) Fibre of water lily.

(*k*) And the particular nouns here enumerated.

लङ्का शेफालिका टीका धातकी पञ्जिका ऽऽढकी ॥

1 City. 2 Nyctanthes arbortristis. 3 Commentary, annotations; a journal 4 Grislea tomentosa. 5 A calender. 6 Cytisus cajan.

7 Plant. 8 A bird. 9 Hiccough.

८ सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका ।

10 A gadfly. 11 Firebrand. 12 An Ant.

13 Diospyros melanoxylon.

तिन्दुकी कणिका भङ्गिः सुरङ्गा-सूचि-माढयः ॥

14 Atom spark. 15 Fracture Decaption; Wave; Irony. 16 Mine opening. 17 Needle. 18 Young leaves.

---

घटा, सृजा, भिदा । अ प्रत्ययात् ( ३।३।१०२ / ३२७९ )–चिकीर्षा, पुत्रीया । कृञः श च (३।३।१०० / ३२७७)–क्रिया, इच्छा ॥ ४ ॥ उणादौ न्यन्त ऊदन्त ईदन्तश्च स्त्रियां–अरणिः, धमनिः, हानिः, ज्यानिः, ग्लानिः, अलाबूः, जम्बूः, लक्ष्मीः, तन्त्रीः । ङ्यन्तमाबन्तमूडन्तं चाभिधेयलिङ्गं रूढिलिङ्गं च स्त्रियां–पुंस इयं पौंस्नी बुद्धिः, हिमानी, अजा, बलाका, श्वश्रूः, ब्रह्मबन्धूः । मुष्टिः प्रहरणं यस्यां क्रीडायां मौष्टा, पल्लवाः प्रहरणमस्यां पाल्लवा, तदस्यां प्रहरणमिति क्रीडायां णः (४।२।५७ / १२६६), ण दिक्–णप्रत्ययोदाहरणमित्यर्थः ॥ ५ ॥ दण्डपातोऽस्यां फाल्गुन्यां वर्तते, श्येनपातोऽस्यां मृगयायां वर्तते, तिलपातोऽस्यां स्वधायां वर्तते, घञः सास्यां क्रियेति ञः, ( ४।२।५८ / १२६७ ) श्येनतिलयोः पाते ञे ( ६।३।७१ / १२६९ ) इति मुक्, स्वधास्त्यस्यां स्वधा श्राद्धम् ॥ ६ ॥ अपचयेऽल्पत्वे यदि वक्तुमिच्छा तदा मृणाल्यादयः स्त्रीलिङ्गाः स्युः । अपचयेऽपचयस्थानलक्षणानि हि स्त्रीपुंनपुंसकानि । आदिशब्दाद्‍मृणाली, तटी, मठी, छत्त्रिका, गृह्यकाण्डी । काचिदिति यत्र लोके पुंनपुंसकयोः स्त्रीत्वं दृश्यते, न सुखादौ । लङ्का राक्षसपुरी । शेफालिका पुष्पविशेषः । टीका वृत्तिः । धातकी नामौषधिः । पाञ्जिका न्यासः । आढकी व्रीहिभेदः, स्वल्पाढकं च ॥ ७ ॥ सिध्रकाशारिके वृक्षभेदौ । हिक्का–ऊर्ध्वं वातप्रवृत्तौ शब्दः । प्राचिका पक्षिविशेषः । उल्का ज्वाला । पिपीलिका वल्मीककृमिः । योऽत्राप्रसिद्धः

19 Scum. Gum.
20 Criticising. ९ पिच्छा-वितण्डा-काकिण्यश् चूर्णिः शाणी द्रुणी दरत् ।
21 Measure. 22 Selected argument. 23 Grindstone a curtain.
24 Centipede. 25 Barbarian.

26 Extreme pain. Destruction. सातिः कन्था तथाऽऽसन्दी नाभी राजसभाऽपि च ॥
27 A rug. 28 Bed. 29 Navel. 30 The royal court.

31 Cymbals.
32 Rejoicing. १० झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
33 Cup. 34 Rising of Zodiacal sign Astrology. 35 plant. 36 Leprosy.

37 Lac. 38 Nit.
39 Mouthful water. लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी. ॥
40 Gout 41 Spoon. 42 Ink.

इति स्त्री-लिङ्ग-संग्रहः ।

The following are masculine viz. ११ पुंस्त्वे स-भेदाऽनुचराः स-पर्यायाः सुराऽसुराः ।
(*a*) Nouns signifying gods, Demons.

Heaven, sacrifice, mountain, cloud, स्वर्ग-यागाऽद्रि-मेघाऽब्धि-द्रु-कालाऽसि-शराऽरयः ॥
Sea, tree, time, school, arrow, enemy.

---

प्रागनुक्तो वा स प्रातिपद्येनोच्यते, अतः शनैर्याति पिपीलिक (सु. र. पृ. ४६१) इति पुंस्त्वमनिषिद्धम् । एवं सर्वत्र । तिन्दुकी नाम वृक्षः फलं च । कणिका—अल्पकणः—गोधूमपिष्टं च । भङ्गिर्विच्छित्तिः । सुरङ्गा तिर्यग्भूखातः । सूचिः सीवनी । माढिर्नाम देशः कवचं च ॥ ८ ॥ पिच्छा—आचामः । वितण्डा स्वपक्षस्थापना (नो) हीनो जल्पः (न्या. सू. १-२-३ पू. ओ.) । काकिणी नाम माषकचतुर्थभागः, पणचतुर्थभाग इत्येके । काकिनीति सभ्याः । चूर्णिर्भाष्यम् । शाणी निकषः, शाण इत्येके, काणीपाठे संकोचोऽर्थः । द्रुणी कर्णजलौका । दरद् म्लेच्छजातिः । सातिः प्रावारविशेषः । कन्था खण्डैः स्यूतं वासः । आसन्दी पीठिका । नाभी तुन्दिः । राज्ञः सभा राजसभा, सभा राजामनुष्यपूर्वेति ($\frac{२।४।२३}{८२६}$) राजनिषेधात्स्त्रीत्वम् ॥ ९ ॥ झल्लरी वाद्यविशेषः । चर्चरी हर्षक्रीडा । पारी पानभाण्डम् । होरा लग्नं जातकं च । लट्वा—अलका भ्रमरकाश्च । सिध्मला पामा णलः श्वित्रं च । लाक्षा जतुः । लिक्षा यूकागर्भः । गण्डूषा—आस्यचुलुकं, गण्डूषोऽपि । गृध्रसी—ऊरुसंघो वातरुक् । चमसी मसूरादिपिष्टं स्वल्पचमसश्च । मसी रञ्जनी । इति स्त्रीलिङ्गशेषः ॥ १० ॥ सुरा असुरास्तद्विशेषास्तदनुचराश्च पर्यायैः सह पुंसि । सुरा दिवौकसः, सुरविशेषाः—इन्द्रो विडौजाः शक्रः, आदित्यः सूर्यो रविः, ब्रह्मा स्वयंभूः, विष्णुः शौरिः, रुद्रः शंभुः । विष्णोरनुचराः—चण्डः प्रचण्डः, जयो विजयः, विष्वक्सेनः । रुद्रानुचराः—नन्दी महाकालो भृङ्गी, गणाः प्रमथाः । एवं सर्वत्र । असुराः पूर्वदेवा दैत्या दानवाः, तद्विशेषाः—विरोचनो बलिर्नमुचिः प्रह्लादः । प्राङ् नपुंसकाधिकारात्पुंलिङ्गाधिकारः । एते सभेदाः सपर्यायाः पुंसि । स्वर्गो नाकस्त्रिदिवः । यागः क्रतुः सप्ततन्तुः, तद्विशेषाः—अग्निष्टोम उक्थोऽतिरात्रः-

Ray of Light, hand, check, lip, arm, tooth, Throat, hair, nail, A pap.

१२ कर-गण्डोष्ठ-दोर्-दन्त-कण्ठ-केश-नख-स्तनाः, ।

(*b*) Terms ending in अह्न or अह.

अह्नाऽहाऽन्ताः, क्ष्वेड-भेदा, रात्राऽन्ताः प्रागसंख्यकाः, ॥

(*c*) Names of poisons. (*d*) Compound terms in रात्र.

(*e*) Resins and gums other exculations of trees.

१३ श्रीवेष्टाऽऽद्याश् च निर्यासा, असन्नन्ता अ-बाधिताः, ।

(*f*) Nouns in अस् or अन्.

(*g*) Nouns in तु or रु.

कशेरु-जतु-वस्तूनि हित्वा तु-रुविरामकाः, ॥

1 Root of scirpus maximus. 2 Lac. 3 A thing.

(*h*) In अ with a penult क, etc.

१४ क-ष-ण-भ-म-रोपान्ता यद्यदन्ता अमी, अथ ।

(*i*) Or with a penult प, etc.

प-थ-न-य-स-टोपान्ता, गोत्राऽऽख्याश्, चरणाऽऽह्वयाः,॥

(*j*) Names of families. (*k*) Names of portions of the *Veda*.

---

अप्तोर्यामः । अद्रिः पर्वतः शैलः, तद्विशेषाः–मेरुर्हेमसानुर्हिमवान् सह्यो विन्ध्यः पारियात्रः । मेघस्तडित्वान् घनः, तद्विशेषः पुष्करावर्तकः । अब्धिः समुद्र उदन्वान्, तद्विशेषः क्षीरोदः । द्रुस्तरुः पादपः, तद्विशेषाः–आम्रस्तालश्चम्पकः । कालः समयः, तद्विशेषाः–क्षणो लवः, मुहूर्तः, मासश्चैत्रः, संवत्सरः । असिः करवालः, तद्विशेषाः—नन्दकश्चन्द्रहासः । शरः सायकः पृषत्कः क्षुरप्रः । अरिर्द्विडमित्रः ॥ ११ ॥ करः पाणिर्हस्तः । गण्डः कपोलः । ओष्ठो दन्तच्छदोऽधरः । दोर्बाहुः । दन्तो रदनः । कण्ठो गलः । केशो वालश्चिकुरः । नखः कररुहः । स्तनः पयोधरः । कृतसमासान्ताहःशब्दोत्तरपदाः पुंसि, रात्राह्नाहाःपुंसि ( $\frac{२।४।२९}{८१४}$ ) इति–पूर्वाह्णः, मध्याह्नः, सायाह्नः । द्व्यहः, त्र्यहः, उत्तमाहः, परमाहः, राजाहःसखिभ्यष्टच् ( $\frac{५।४।९१}{७८८}$ ), अह्नो ह्न एतेभ्यः ( $\frac{५।४।८८}{७९०}$ ) इत्यह्नादेशः । विषविशेषाः पुंसि–क्ष्वेडो गरलः कालकूटो हलाहलः । पुंसि क्लीबे च प्रागुक्तत्वात्पुंसि प्रचुरप्रयोगार्थं विधिः । एवं सर्वत्र । विषं तु क्लीबे । असंख्यापूर्वाः कृतसमासान्ता रात्रान्ताः पुंसि–अहोरात्रः, दीर्घरात्रः, वर्षारात्रः, अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ( $\frac{५।४।८७}{७८७}$ ) इत्यच्, नेह–त्रिरात्रं, षड्रात्रम् ॥ १२ ॥ श्रीवेष्टः सर्जरसः कर्चूरः । निर्यासो वृक्षद्रवः । असन्ता अन्नन्ताश्चाबाधिता अनपोदि[ हि ]ताः पुंसि–पुरोधाः, उशना, मज्जा, प्लीहा । अबाधिता इति किं–इदं यादो जलचरः, इदं लोम, इदं साम । द्व्यच्कमसिसुसन्नन्तमित्यपवादो वक्ष्यते । कशेर्वादीनि वर्जयित्वा त्वन्ता रुशब्दान्ताश्च पुंसि–अयं वास्तुर्गृहाधारः, मस्तुः, सक्तुः, धातुः, किंशारुधान्यशूकः, त्सरुः, खड्गादिमुष्टिः, मरुर्धन्वा, ऊरुः सक्थि । नेह–इदं कशेरु जलजः कन्दः, जतु लाक्षा, वस्तु पदार्थः ॥ १३ ॥ ककरादिद्वादशाक्षरोपधा अकारान्ताः पुंसि । क–शल्कः, वृक्कः, श्वेतकः, वराटकः । ष– वृक्षः, कक्षः, निकषः । ण– गणः, बाणः, कणः ।

(*l*) Names in घञ्, etc.
(*m*) In ल्यु, etc.
(*n*) In इमनिच्;

१५ नाम्न्यकर्तरि भावे च घञ-जब्-नङ्-ण-घाऽथुचः, ।
ल्युः कर्तरीमनिच् भावे को, घोःकिः प्राऽऽदितोऽन्यतः, ॥

(*o*) In क, क्त. (*p*) ending in कि.

(*q*) The compound term अश्ववडव.
(*r*) कान्त in composition prefixed or suffixed.

१६ द्वन्द्वेऽश्व-वडवावश्व-वडवा, न समाहृते, ।
कान्तः सूर्येन्दु-पर्याय-पूर्वो ऽयः-पूर्वको ऽपि च, ॥

---

भ– कुम्भः, शलभः । म– आचामः, धूमः, ग्रामः । र–अङ्कुरः, करः, दरः, समीरः । प– सर्पः, सूपः, कलापः, बाष्पः । थ-सार्थः, शपथः, नाथः । न–फेनः, हायनः, स्तनः, जनः । य–तनयः, व्ययः, तन्तुवायः । स– रसः, दासः, कुत्सः, वत्सः । ठ– सरटः, पटः, कटः । अपत्यप्रत्ययान्ताः शाखाध्यायिनश्च पुंसि–गार्ग्यः, वासिष्ठः, दाक्षिः, कठः, बह्वृचः, छन्दोगः ॥ १४ ॥ अकर्तरि च कारके संज्ञायां भावे चार्थे घजन्तादयः पुंसि । घञ्– प्र( प्रा )सीदन्त्यस्मिन्नयनमनांसीति प्र( प्रा ), सादः, प्रक्रियते प्रकारः, पाकः, त्यागः, अकर्तरि च–कारके संज्ञायां (३।३।१९/३१८८) घञ् । अच्– पचः चयः, नयः, पचाद्यच् नन्दिग्रहीति (३।१।१३४/२८९६), एरच् (३।३।५६/३२३१) । अप्– करः, भरः, स्तवः, लवः, प्लवः, ऋदोरप् (३।३।५७/३२३२) । नङ्– यज्ञः, यत्नः-प्रश्नः, यजयाचयतविच्छेति (३।३।९०/३२६८) नङ् । उपलक्षणत्वात्–स्वपो नन्(३।३।९१/३२६९)। णः–स्यदनं स्यादः, नौ ण च (३।३।६०/३२३७) इति णः । घः–प्रहरः, निगमः, गोचरः, पुंसि संज्ञायां घः प्रायेण (३।३।११८/३२९६) । अथुच्–आनन्दथुः, श्वयथुः, वेपथुः, ट्वितोऽथुच् (३।३।८९/३२६७) । कर्तरि ल्युः पुंसि– नन्दयति नन्दनः, रमयति रमणः, नन्दिग्रहिपचेति (३।१।१३४/२८९६) ल्युः । इमनिजन्ताः पुंसि– पृथोर्भावः प्रथिमा, लघिमा, पृथ्वादिभ्य इमनिज् वा (५।१।१२२/१७८४) । भाव इति किं–तरिमा पृथ्वी, च[ व ]रिमा तपस्वी, औणादिक इमनिच् । भावे कप्रत्ययान्तः पुंसि– आखूनामुत्थानमाखूत्थो वर्तते, सुपि स्थः (३।२।४/२९१६) इति योगविभागात्कः । घञर्थे कविधानं (वा० २२०४/३२३४)– प्रस्थः, प्रस्नः । प्रादित उपसर्गादन्यतः सुबन्ताच्च पराद् घुसंज्ञकात्परो यः किप्रत्ययस्तदन्तः पुंसि– निधिः, प्रधिः, आधिः, आदिः, उपसर्गे घोःकिः (३।३।९२/३२७०), अब्धिः, इषुधिः, कर्मण्यधिकरणे च (३।३।९३/३२७१) इति किः ॥ १५ ॥ समाहारादन्यत्र द्वन्द्वेऽश्ववडवौ–अश्ववडवाः पुंसि, द्वित्वबहुत्वयोरुदाहृतम् । नेह–अश्ववडवं, विभाषा वृक्षमृगेति (२।४।१२/९१६) समाहारविकल्पः । सूर्यादिपूर्वः कान्तशब्दः पुंसि– सूर्यकान्तः, भास्वत्कान्तः, इन्दुकान्तः, चन्द्रकान्तः,

(s) The nouns here enumerated. १७ वटकश् चा ऽनुवाकश् च रल्लकश् च कुडङ्गकः ।
1 Pulse. 2 Hymn of Vedas. 3 Deer ; eyelid.
4 Tree ; Root ; House ; Arrowhead.

5 Feather. 6 Sam veda. 7 Box. 8 Sodo-aite. पुङ्खो न्यूङ्खः समुद्गश् च विट-पट्ट-धटाः खटाः ॥
9 Cloth. 10 A balance. 12 Grass.

13 Townwell. 14 A wharf. १८ कोट्टार-घट्ट-हट्टाश् च पिण्ड-गोण्ड-पिचण्ड-वत् ।
15 A market. 16 Bump of food. 17 Mountaineers. 18 Abdomen.

19 Goitre. 20 A box. गडुः करण्डो लगुडो वरण्डश् च किणो घुणः ॥
21 A staff. 22 Multitude. 23 Scar. 24 Insect.

25 Bellows. 26 Dressing of hair. १९ दृति-सीमन्त-हरितो रोमन्थोद्गीथ-बुद्बुदाः ।
27 Green colour. 28 Chewing the cud. 29 Samveda. 30 Bubble of water.

31 The plant. 32 Hundred million. 33 Lathe 34 Form. 35 Mound of Earth. 36 A post. कासमर्दो ऽर्बुदः कुन्दः फेन-स्तूपौ स-यूपकौ ॥

37 Sun shine. 38 A soldier. २० आतपः क्षत्रिये नाभिः कुणप-क्षुर-केदराः ।
39 A spear. 40 A razor. 41 Plant.

42 A wave. 43 Arrow. पूर-क्षुर-प्रचुक्राश् च गोल-हिङ्गुलु-पुद्गलाः ॥
44 Sorrel. 45 Globe. 46 Vermilion. 47 Soul. Body.

---

अयस्कान्तः ॥ १६ ॥ वटको भक्ष्मविशेषः । अनुवाक् ऋग्यजुःसमूहः । रल्लकः पक्ष्म-कम्बलः । कुडङ्गको वृक्षलतागहनम् । पुङ्खः काण्डमूलम् । न्युङ्ख ओंकाराः षोडश । समुद्गः करण्डकः । विटः कामुकानुचरः । पट्ट उष्णीषादिः । धटो दारुतुला । खटस्तृणम् ॥ १७ ॥ कोट्टो दुर्गः । अरघट्टो महाकूपः । हट्ट आपणः । पिण्डो ग्रासः । गौडो गुडको देशविशेषो वा । पिचण्ड उदरम् । गडुर्गण्डः ( कपोलः ) । करण्डः समुद्गः । लगुडो यष्टिः । वरण्डः समूहः । किणो मांसग्रन्थिः । घुणो दारुक्रिमिः ॥ १८ ॥ दृतिर्भस्त्रा । सीमन्तः केशसीम्नोऽन्तः, शक-न्ध्वादित्वात्पररूपम् ( ३६३२/७८ )। हरिन्नीलो वर्णः, दिक्पर्यायस्तु स्त्रीलिङ्गः प्राग्वच-नात् । रोमन्थस्तिरश्चां चर्वितचर्वणम् । उद्गीथ ओंकारः । बुद्बुदोऽम्बुस्फोटः । कास-मर्दो वेसवारभेदः । अर्बुदोऽद्रिर्व्याधिः संख्याभेदश्च । कुन्दा माघ्यं पुष्पम् । फेनो डिण्डीरः । स्तूपो मृदादिकूटः । यूपो यज्ञे पशुबन्धनकाष्ठम् ॥१९॥ आतपोऽर्कोद्द्योतः। क्षत्त्रियपर्याया नाभिः, नेह—इयं नाभिस्तुन्दिः । कणपः प्रासविशेषः । क्षुरो नापित-भाण्डम् । केदरो रूपकम् । पूरस्तोयोल्लासः । क्षुरप्रः काण्डभेदः । चुकोऽम्ललव्यजनम् । गोलो वर्तुलः पिण्डः, यथा भूगोलः । हिङ्गुलः—रागद्रव्यम्, अकारान्तोऽयमित्येके ।

48 Ghost.
49 Javelin.
50 Wrestler. 51 Oblation. 52 Battle axe.

२१ वेताल-भल्ल-मल्लाश् च पुरोडाशो ऽपि पट्टिशः ।

53 A Dish of half boiled rice.
54 Joy. 55 Shallow boiler. 56 A spitting pot.

कुल्माषो रभसश् चैव स-कटाहः पतद्ग्रहः ॥

इति पुंल्लिङ्ग-शेष-संग्रहः ।

(A) The following are neuter : viz.
(*a*) Nouns signifying sky, forest, leaf, hole, frost, water, cold, heat, flesh, blood, mouth, eye, wealth, army,

२२ द्वि-हीने ऽन्यच् च खाऽरण्य-पर्ण-श्वभ्र-हिमोदकम् ।
शीतोष्ण-मांस-रुधिर-मुखाऽक्षि-द्रविणं बलम् ॥

fruit, gold, copper, iron, pleasure, pain, good luck, ill luck.
Water, flower, salts, same, perfumes.

२३ फल-हेम-शुल्ब-लोह-सुख-दुःख-शुभाऽशुभम् ।
जल-पुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥

(B) Numerals above 100.
(*b*) Dissyllables in अस् इस् उस् or अन्.
(*c*) Nouns in अन.

२४ कोट्याः शताऽऽदि-संख्याऽन्या, वा लक्षा, नियुतं च तत् ,।
द्व्यच्कमसिसुसन्नन्तं, यदनाऽन्तम-कर्तरि, ॥

---

पुद्गलो जीवः ॥ २० ॥ वेतालो भूताविष्टः शवः । भल्लः काण्डभेदः । पुरोडाशो यज्ञे पिष्टपूपः । पट्टिशो नामायुधम् । कुल्माषोऽर्धस्विन्नो माषादिः । रभसः पौर्वापर्या-विचारः । कटाहो द्रव्यपचनभाण्डम् । पतद्ग्रहः–अवेलकाधारः ॥ २१ ॥ इति पुंलिङ्गशेषः । द्विहीने तृतीये नपुंसके, उक्तादन्यः शेषो वक्ष्यतेः इत्यर्थः । खादि सपर्यायविशेषं तृतीये । खमिन्द्रियमाकाशं चोच्यत–खमिन्द्रियं हृषीकं करणं, खं गगनमन्तरिक्षम् । अरण्यं विपिनं कान्तारम् । पर्णं पलाशं दलम् । श्वभ्रं विवरं सुषिरम् । हिमं प्रालेयं तुहिनम् । उदकं पानीयं तोयम् । शीतं शिशिरम् । उष्णं घर्मम् मांसं तरसं पलम् । रुधिरं रक्तमसृक् । मुखं तुण्डमास्यम् । आक्षि नयनं लोचनम् । द्रविणं धनं स्वापतेयम् । बलं सैन्यमनीकम् ॥ २२ ॥ फलविशेषः–आम्रं पनसं कपित्थम् । हेम सुवर्णं कार्तस्वरम् । शुल्बं ताम्रमौदुम्बरम् । लोहमश्मसारम् । सुखमुपजोषं शान्तम् । दुःखमाभीलं कृच्छ्रम् । शुभं पुण्यं सुकृतम् । अशुभं पापं दुष्कृतम् । जलपुष्पभेदाः–अम्बुजं कुमुदमिन्दीवरं कह्लारम् । लवणभेदाः–सैन्धवमौद्-भिदं बिडं रुचकम् । व्यञ्जनभेदाः–व्यञ्जनमुपसेचनं दधि दुग्धमुदश्विन्मस्तु । अनुलेपनभेदाः–[ अनुलिप्यते ] अनुलेपनं कुङ्कुममग्निशिखं काश्मीरं चन्दनं श्रीखण्डम् ॥ २३ ॥ भयान्नृ[ मृ ]तशक्तृद्वक्त्रा ( स्तु )चापाभरणलाङ्गलम् । दावौं-षधमृधापत्यहृदयोदरकाकुदम् ॥ पत्तनाजिरशृङ्गाश्वद्वारबर्होडुमानसम् । ध्वान्तं चाव्यक्तलिङ्गं च भणितौ यत्प्रयुज्यते ॥ कोटेरन्या शतादिका संख्या तृतीये–शतं सहस्रमयुतं, नेह–इयं कोटिर्लक्षशतम् । शतादिरिति किं–इयं त्रिंशत् , इयं नवतिः ।

(*d*) In त्र, स and ल. २५ त्राऽन्तं, स-लोपधं, शिष्टं, रात्रं प्राक्-संख्यया ऽन्वितम्, ।
(*e*) With स and ल as penult. (6) In रात्र with a numeral.
(*f*) Compounds in पात्र. पात्राऽऽद्यदन्तैरेकाऽर्थो द्विगुर् लक्ष्याऽनुसार-तः, ॥
(*g*) Nouns compounded copulatively or adverbially. २६ द्वन्द्वैकत्वाऽऽव्ययीभावौ, पथः संख्याऽव्ययात् परः, ।
(*h*) पथिन्, with a numeral or particle.
(*i*) छाया, with a word in the 6th case. षष्ठ्याश् छाया बहूनां चेद् विच्छायं, संहतौ सभा ॥
shadow of a flock of birds.
(*j*) सभा in composition with the 6th case.

---

लक्षशब्दस्तृतीये वा, पक्षे स्त्रिया निर्देशात्, यथा—कियती पञ्चसहस्री कियती लक्षाथ कोटिरपि कियती। औदार्योन्नतमनसां रत्नवती वसुमती कियती॥ इदं लक्षं तदेव प्रयुताख्यमित्यभिधानशेषोऽपि। असन्तमिसन्तमुसन्तमन्नन्तं च यद् द्विस्वरं तत्तृतीये–इदं यशस्तेजः पयः सर्पिर्हविर्यजुर्धनुः, इदं नाम रोम नर्म पर्व। अकर्तरि यदनप्रत्ययान्तं तत्तृतीये–साध्यतेऽनेनेति साधनं, अधिक्रियतेऽस्मिन्नधिकरणं, पाकः पचनम्। कर्तरि तु मधुसूदनः, रमणः, मदनः। कथमास्थानमास्थानी, करणं करणी, प्रमाणं प्रमाणी, अधिकरणमधिकरणी, राजधानं राजधानी ल्युटष्टित्वात्, किं च, कृत्यल्युटो बहुलम् ( $\frac{3|3|113}{2841}$ ) इत्यनान्तानां त्रिलिङ्गत्वं स्म[ स्व ]रन्ति–राजभोजनी क्षैरेयी, राजभोजनः शालिः, राजभोजनं भक्तम्, इध्मव्रश्चनी शस्त्री, इध्मव्रश्चनः परशुः, इध्मव्रश्चनं शस्त्रम्, पलाशशातनी, पलाशशातनः, पलाशशातनम्, पूरणी, पूरणः, पूरणम्, गोदोहनी वटी, गोदोहनो घटः, गोदोहनं माण्डम्॥ २४॥ केवलं त्रान्तं, सकारनकारोपधं त्रशब्दान्तं च, शिष्टं प्रागुक्तादन्यच्छब्दरूपं तृतीये–पात्रं, अमत्रं, दात्रं, कलत्रं, शस्त्रं, वस्त्रं, शास्त्रं, अन्त्रं, तन्त्रं, यन्त्रम्। शिष्टमिति किं–पुत्रः, औपवस्त्रः, मन्त्रः। संख्यापूर्वं रात्रान्तं तृतीये, रात्रा ह्लाहाः पुंसीति ( $\frac{2|4|29}{824}$ ) पुंस्त्वं प्राप्तम्–तिसृणां रात्रीणां समाहारस्त्रिरात्रम्, एवं पञ्चरात्रं, षड्रात्रम्। संख्ययेति किं–वर्षारात्रः। पात्रादिभिरकारन्तैरुत्तरपदैः समाहारे लक्ष्यानुसारेण यो द्विगुः स तृतीये–पञ्चपात्रं, त्रिभुवनं, त्रिपुरदाहमुमापतिसेविनः (किराताजु॰ ५-१४), चतुर्युगम्। पात्रादीति किं–त्रिलोकी, त्रिवेदी। एकार्थ इति किं–पञ्चकपालः पुरोडाशः। लक्ष्यानुसारत इति किं–त्रिपुरी, पञ्चमूलीशृतं पयः॥ २५॥ द्वन्द्वस्य यदेकत्वं समाहारोऽव्ययीभावश्च समासस्तृतीये–इदं पाणिपादं, मार्दङ्गिकपाणविकं, स्त्रीषु कथा वर्तत इदमधिस्त्रि, इदं तिष्ठद्गु कालः, इदमुन्मत्तगङ्गं देशः। संख्याव्ययाभ्यां परः कृतसमासान्तः पथिशब्दस्तृतीये–त्रयाणां पथां समाहारस्त्रिपथं, विरुद्धः पन्था विपथं, कुत्सितः पन्थाः कापथम्। संख्याव्ययादिति किं–धर्मपथः। षष्ठ्यन्तात्परा

(C) Words showing multitude.
1 Multitude of female slaves; 1 King's palace; a meeting of Kings. 1 Multitude of demons.

२७ शालाऽर्था ऽपि परा राजाऽमनुष्याऽर्थादराजकात्, ।
**दासीसभं नृपसभं रक्षःसभमिमा दिशः, ॥**

(*k*) So in उपज्ञा, and उपक्रम.
The creation by Brahma.

२८ उपज्ञोपक्रमाऽन्तश् च तदाऽऽदित्व-प्रकाशने, ।
**कोपज्ञ-कोपक्रमाऽऽदि, कन्थोशीनर-नामसु, ॥**

(*j*) Also कन्था etc.

(*k*) Nouns in affixes having an abstract sense.
(*l*) In अह, with certain terms.

२९ भावे न-ण-क-चिद्-भ्यो ऽन्ये समूहे भाव-कर्मणोः ।
अदन्त-प्रत्ययाः; पुण्य-सुदिनाभ्यां त्वहः परः, ॥

(*m*) With terminations in अ.

---

कृतसमासान्ता छाया तृतीये बहूनां चेत्—गृध्राणां छाया गृध्रच्छायं, वीनां छाया विच्छायं, शलभच्छायं, छायाबाहुल्ये ( २।४।२२ / ८२५ ) इति नपुंसकम्। बहूनामिति किं—वृक्षस्य च्छाया वृक्षच्छाया। षष्ठ्याः परा समासे समूहार्था सभा तृतीये—दासीनां सभा दासीसभं दासीसमूह इत्यर्थः, ब्राह्मणसभं, अशाला च ( २।४।२४ / ८२७ ) इति नपुंसकम्। संहताविति किं—दास्याः सभागृहं दासीसभा ॥ २६ ॥ राजार्थेभ्योऽमनुष्यार्थेभ्यश्च षष्ठ्यन्तेभ्यः परा समूहार्था शालार्थापि सभा तृतीये, राजशब्दपरा चेन्न स्यात्—नृपस्य सभागृहं नृपाणां समूहो वा नृपसभं, ईश्वरसभं, रक्षःसभं, पिशाचसभम्। अराजकादिति किं—राजसभा, सभाराजामनुष्यपूर्वा ( २।४।२३ / ८२६ ) इति नपुंसकम्। इमा दिश इमान्युदाहरणानीत्यर्थः ॥ २७ ॥ उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः, तदन्तः शब्दः षष्ठीसमासे तदादिकथने द्योत्ये तृतीये—यथा कास्योपज्ञा कोपज्ञं सर्गः, चन्द्रोपज्ञमसंज्ञकं व्याकरणं, पाणिन्युपज्ञमकालं( लकं ) व्याकरणं, कस्योपक्रमः कोपक्रमं सृष्टिः, नन्दोपक्रमाणि मानानि। तदादित्व इति किं—डित्थोपज्ञो रथः, चैत्रोपक्रमो घटः, उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ( २।४।२८ / ८२४ ) इति नपुंसकम्। उशीनरदेशे या कन्था षष्ठ्याः परा सा संज्ञाया गम्यमानायां तृतीये—सौशमीनां कन्था सौशमिकन्थम्। उशीनरेति किं—दाक्षिकन्था। नामस्विति किं—चैत्रकन्था, संज्ञायां कन्थोशीनरेषु ( २।४।२० / ८२३ ) इति नपुंसकम् ॥ २८ ॥ नणकेभ्यश्चकारानुबन्धेभ्यश्च येऽन्ये भावेऽर्थे कृतस्तथा समूहेऽर्थे भावकर्मणोश्च ये तद्धितास्ते ते प्रत्यया येषां ते शब्दास्तृतीये—समन्ताद्रावः सांराविणं वर्तते, सांकूटिनं वर्तते, अभिविधौ भाव इनुण् ( ३।३।४४ / ३२१८ ), अणिनुणः ( ५।४।१५ / ३२१९ ) इति स्वार्थेऽण्। ब्रह्मणो भवनं ब्रह्मभूयं गतः, भुवो भावे ( ३।१।१०७ / २८५५ ) इति क्यप्। नणकचिद्भ्योऽन्य इति किं—( न )—प्रश्नः, यत्नः, ( ण )—न्यदनं न्यादः, नौ ण चेति ( ३।३।६० / ३२३७ ), ( क )—आखूनामुत्थानमाखूत्थः, सुपि स्थः ( ३।२।४ / २९१६ ) इति योग-

(n) Adverbs and epithets of indeclinables. ३० क्रियाऽव्ययानां भेदकान्येकत्वे ऽप्युक्थ-तोटके ।

(o) The nouns here specified. चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम् ॥

1 Half eaten food. A palm fruit; A cocoanut. 2 Peacock's tail. 3 House-pillar. 4 Turban. A diadem. 5 A joint. 6 Long measure.

7 Grand sacrifice. 8 Sacrifice. 9 Prose a woman. 10 Verse; sugar. ३१ राजसूयं वाजपेयं गद्य-पद्ये कृतौ कवेः ।

11 Gem. 12 Commentary. माणिक्य-भाष्य-सिन्दूर-चीर-चीवर-पिञ्जरम् ॥

13 Minium. 14 Bark. Rag. 15 Dress of a mendicant. 16 A cage.

17 Atheistical philosophy. 18 Yellow orpiment. 19 Basket. 20 Caldron. 21 Country. ३२ लोकायतं हरितालं विदल-स्थाल-बाह्लिकम् ।

इति नपुंसक-शेष-संग्रहः ।

(a) The nouns here specified are masculine and neuter. पुन्-नपुंसकयोः शेषोऽर्धर्च-पिण्याक-कण्टकाः ॥

1 Half a verse of Vedas. 2 Oil cake. 3 Thorn, A fault; Horripilation.

---

विभागात्कः, (चित्)—श्वयनं श्वयथुः, ट्वितो थुच् ($\frac{3|3|89}{3266}$), आसनमासना, भावना, ण्यासश्रन्थो युच् ($\frac{3|3|107}{3284}$)। समूहादौ तद्धिताः खल्वपि—भिक्षाणां समूहो भैक्षं, यौवतं, राजकं, औक्षकं, गोर्भावो गोत्वं, शुक्लस्य भावः कर्म वा शौक्ल्यं मार्दवं, मानोज्ञकं, स्तेयम्। पुण्यसुदिनाभ्यां परः कृतसमासान्तोऽहःशब्दस्तृतीये—पुण्यं च तदहश्च पुण्याहं, सुदिनशब्दोऽत्र शोभनवाची, यथा—सुदिनासु सभासु कार्यमेतत्, पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा ($\frac{1553}{821}$) इति वक्तव्यात् नपुंसकत्वम् ॥२९॥ क्रियाविशेषणान्यव्ययविशेषणानि च तृतीये—एकवचनान्तानि च भवन्ति—मृदु पचति, शोभनं पचति, पूर्वस्यां दिशि देशे काले वा पुरस्ताद्रम्यं, श्वः शोभनम्। एते शब्दास्तृतीये—उक्थं सामविशेषः, तोटकं वृत्तभेदो दशरूपकभेदश्च, चोचं भुक्तोच्छिष्टा फेला, नारिकेरफलस्य फलत्वात्सिद्धं, उक्तमेकाक्षरं छन्दः, अत्युक्तं च द्व्यक्षरम्। गृहस्य स्थूणा गृहस्थूणम्। तिरीटं शिरोवेष्टनम्। मर्म संधिस्थानम्। योजनं चतुःक्रोशी ॥ ३० ॥ राजसूयवाजपेये यज्ञविशेषौ। कविकर्मण्येते द्वे तृतीये—गद्यं दण्डकबन्धः, पद्यं श्लोकबन्धः। कृतौ कवेरिति किं—गद्या स्त्री, पद्या शर्करा। मणिरेव माणिक्यम्। भाष्यं चूर्णिः। सिन्दूरं चीनपिष्टम्। चीरं वार्क्षी त्वक्। चीवरं मुनिवासः। पञ्जरं पक्ष्यादिबन्धनगृहम् ॥ ३१ ॥ लोकायतं नाम तर्कः। हरितालं धातुभेदः। विदलं दाडिमकणः, फल[ले]स्य सिद्धम्। स्थालं भोजनपात्रम्। बाह्लवं देशः। इति नपुंसकलिङ्गशेषः।

4 Sweet meat.
5 Perforance.
६ Chisel. 7 Petticoat. 8 Cloth. 9 Million. Ophthalmia ; A mountain.

३३ मोदकस् तण्डकष् टङ्कः शाटकः कर्पटोऽर्बुदः ।

10 Sin. 11 Exertion.
12 Book on medicine.
13 Tree. 14 Emblick myrobalan. 15 Hollow reed.

पातकोद्योग-चरक-तमालाऽऽमलका नडः ॥

16 Leprosy, Wealth.
17 Head. 18 Rum.
19 Forcemeat. 20 Warwhoof. 21 Well being. 22 Pavement; mine of gems.

३४ कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेम-कुट्टिमम् ।

23 Confluence.
24 Adhaka, A palc of silver. 25 Eye disease 26 Expenses. 27 Indeclinable. 28 Dancing.

संगमं शतमानाऽर्म-शम्बलाऽव्यय-ताण्डवम् ॥

29 Bridle.
30 Bulbous root.
31 Cotton. 32 Opposite bank. 33 Yoke.

३५ कवियं कन्द-कार्पासं पारावारं युगन्धरम् ।

34 Sacrificial post.
35 Window.
36 Religious vessel. 37 Peas-porridge. 38 Spoon. 39 Barley meal.

यूपं प्रग्रीव-पात्रीवे यूषं चमस-चिक्कसौ ॥

(*b*) Certain terms as घृत are exclusively neuter in popular speech except in vedas.

३६ अर्धर्चाऽऽदौ घृताऽऽदीनां पुंस्त्वाऽऽद्यं वैदिकं ध्रुवम्, ।

तन् नोक्तमिह, लोके ऽपि तच् चेदस्त्यस्तु शेष-वत् ॥

इति पुन्-नपुंसक-शेष-संग्रहः ।

---

अर्धमिदं वार्धमृचोऽर्धर्चः । पिण्याकं खलिः । कण्टकं लतारोम ॥ ३२ ॥ मोदकं भक्ष्यविशेषः । तण्डकं परिष्कारः, दण्डको वायम् । टङ्कोऽश्मदारणः । शाटकं पटः । खर्वटश्चतुःशतग्रामाणां संग्रहस्थानम् । अर्बुदोऽक्षिरोगः संख्याविशेषश्च, पर्वते तु पुंलिङ्गः । पातको गोहत्यादिः । उद्योग उत्साहः । चरकं शास्त्रविशेषः । तमालं वृक्षभेदः । आमलको धात्रीफलं, वृक्षे त्वामलकी । नडोऽन्तः—सुषिरं तृणम् ॥ ३३ ॥ कुष्ठं त्वग्रोगः, द्रव्यं च । मुण्डं शिरः, मुण्डिते तु वाच्यलिङ्गम् । शीधुर्मद्यम् । बुस्तं मांसशष्कुली । क्ष्वेडितं मुखध्वनिभेदः । क्षेमं कुशलम् । कुट्टेन निर्वृत्तः कुट्टिमो मणिभूः । संगमो नद्यादिमेलः । शतमानं रूप्यपलं, यत्स्मृतिः—द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते । शतमानं तु दशभिर्धरणैः पलमेव च ॥ अर्मोऽक्षिरुक् । शम्बलः पथिव्ययः (पाथेयं) । अव्ययमलिङ्गमसंख्यम् । ताण्डवं नृत्यम् ॥ ३४ ॥ कवियमश्वमुखबन्धनम् । कन्दं मूलविशेषः । कर्पासं बादरम् । पारं नद्याः परं पार्श्वम् । अवारमर्वाक्पार्श्वम् । युगंधरं रथकाष्ठम् । यूपं क्लिन्नासृक् । प्रग्रीवं वातायनम् । पात्रीवं यज्ञोपकरणम् । यूषं मुद्गादिनिर्यासः । चमसं यज्ञेऽम्बुप्रणयनम् । चिक्कसं यवपिष्टम् ॥ ३५ ॥ अर्धर्चादिगणे पूर्वैर्घृतादीनां पुंस्त्वं यदुक्तं तन्निश्चितं छान्दसम् । अत इह लौकिके नोक्तम् । अथ प्रमादाल्लोके दृश्यते यदि तल्लिङ्गशेषव[त्वा]दङ्गीकार्यम् ॥ ३६ ॥

(*a*) The following are masculine and feminine, viz. Patronimics.　३७ स्त्री-पुंसयोरपत्याऽन्ता, द्वि-चतुः-षट्-पदोरगाः ।
(*b*) Generic names of animals.
(*c*) Names of males, and by association, of females.　जाति-भेदाः, पुमाख्याश् च स्त्री-योगैः सह, मल्लकः ॥
(*d*) The terms here specified. 1 Oil vessel.
2 Wave.
3 A cowry.　३८ ऊर्मिर् वराटकः स्वातिर् वर्णको झाटलिर् मनुः ।
4 Star. 5 Pigment. 6 tree 7 Woman's name.
8 Crucible.
9 A measure.　मूषा सृपाटी कर्कन्धूर् यष्टिः शाटी कटी कुटी ॥
10 A jujube. 11 Staff. 12 A Petticoat. 13 Hip. 14 A hut.

इति स्त्री-पुंस-शेष-संग्रहः ।

(*a*) The following are feminine and neuter, viz. Nouns in ष्यञ् or वुञ्, sometimes.　३९ स्त्री-नपुंसकयोर् भाव-क्रिययोः ष्यञ्, क्वचिच् च वुञ्, ।
2 Propriety.
2 Friendship.　औचित्यमौचिती, मैत्री मैत्र्यं, वुञ् प्रागुदाहृतः, ॥
(*b*) Compounds in सेना, etc.　४० षष्ठयन्त-प्राक्-पदाः सेना-छाया-शाला-सुरा-निशाः, ।
1 Army of men.
2 Night in which dogs bark. 3 Cowpen.　स्याद् वा नृसेनं श्वनिशं गोशालमितरे च दिक्, ॥
(*c*) Numerals with nouns in आप् or अन्.　४१ आबन्नन्तोत्तर-पदो द्विगुश् चाऽपुंसि, नश् च लुप्, ।
2 Three beds.
2 Three carpenters.　त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि, ॥

इति-स्त्री-नपुंसक-शेष-संग्रहः ।

---

इति पुंनपुंसकशेषः । स्त्रीपुंसयोः शेषो वक्ष्यत इति शेषः । अपत्यप्रत्ययान्ताः स्त्रीपुंसयोः—वासिष्ठः—वासिष्ठी, गार्ग्यः—गार्गी । द्विपदादयो जातिविशेषाः स्त्रीपुंसयोः—पुरुषः—पुरुषी, कठः—कठी, कुक्कुटः—कुक्कुटी, मृगः—मृगी, अयं गौः—इयं गौः, अयं कपिः—इयं कपिः, भ्रमरः—भ्रमरी, वरटः—वरटी, उरगः—उरगी, अयमहिः—इयमहिः । एते मल्लकादयः शब्दाः स्त्रीयोगैः सह पुमाख्याः स्त्रीनरलिङ्गा इति ज्ञेयाः ॥ ३७–३८ ॥ इति पुंस्त्रीलिङ्गशेषः । सिंहावलोकितेन (न)पुंसीत्येव द्वयोः । भावे कर्मणि च ष्यञन्तः स्त्रीनपुंसकलिङ्गः—यथा—उचितस्य भावः कर्म वा, गुणवचन-ब्राह्मणादिभ्यः कर्मणि च ($\frac{5|1|1|2|4}{1|7|8|8}$) इति ष्यञ्, एवं वैदग्ध्यं—वैदग्धी, सामग्र्यं—सामग्री । चोरस्य भावः कर्म वा चौरिका—चौरिकम् । क्वचिद्ग्रहणान्नेह—शौक्ल्यं, ब्राह्मण्यं, मानोज्ञकं, रामणीयकं, साहायकं, शैष्योपाध्यायिका, गार्गिका, काठिका ॥ ३९ ॥ षष्ठयन्तपूर्वपदाः सेनादयः स्त्रीनपुंसकयोः—नृणां सेना नृसेनं नृसेना, शुनां निशा श्वनिशं श्वनिशा, भूतनिशं भूतनिशा, गवां शाला गोशालं गोशाला । एवमितरे छायासुरे उदाहार्ये, यथा—वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छायं वृक्षच्छाया, यवसुरं यवसुरा ॥४०॥ आबन्तोत्तरपदो द्विगुरन्नन्तोत्तरपदो द्विगुश्चापुंसि स्त्रीनपुंसकयोः, नस्य

(A) The nouns here specified admit the three genders. ४२ त्रिषु पात्री पुटी वाटी पेटी कुवल-दाडिमौ ।

1 Vessel. 2 One hard. 3 Box. 4 A jujube tree. 5 Pomegranate.

इति त्रि-लिङ्ग-शेष-संग्रहः ।

(B) The gender of the final is retained. परं लिङ्गं स्व-प्रधाने द्वन्द्वे, तत्पुरुषे ऽपि तत्, ॥

(*a*) That of another term is followed in certain compounds. ४३ अर्थाऽन्ताः, प्राद्यलम्-प्राताऽऽपन्न-पूर्वाः परोपगाः, ।

(*b*) Numerals and pronouns. तद्धिताऽर्थो द्विगुः, संख्या-सर्वनाम-तदन्तकाः, ॥

---

च लुब्भवतीति प्रसङ्गाल्लक्षणानुवादः—तिसृणां खट्वानां समाहारस्त्रिखट्वं त्रिखट्वी, त्रयाणां तक्ष्णां समाहारस्त्रितक्षं त्रितक्षी ॥४१॥ इति स्त्रीनपुंसकशेषः । एते त्रिलिङ्गाः—पात्रो भाजनं, पुट आच्छादनं, वाटो वृत्तिः, पेटः संहतिः परिच्छदश्च, कुवलं कोलिफलं, दाडिमं विदलम् । इति त्रिलिङ्गशेषः । स्वप्रधान इतरेतरयोगद्वन्द्वे तत्पुरुषे चोत्तरपदस्य यल्लिङ्गं तद्भवति—कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ, कुलविप्रोऽयं, विप्रकुलमिदं, अर्धं पिप्पल्या अर्धपिप्पलीयं, चन्द्रार्धोऽयं, परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ( २।४।२६/८१२ ) ॥ ४२ ॥ अर्थशब्दान्ताः प्राद्यलमादिपूर्वपदाश्च परोपगाः वाच्यलिङ्गा इत्यर्थः । ब्राह्मणायेयं ब्राह्मणार्था शिखरिणी, ब्राह्मणार्थ ओदनः, ब्राह्मणार्थं पयः, अर्थेन नित्यसमासःसर्वलिङ्गता च (वक्तव्या) (वा० १२७३/६९८), प्रगत प्राचार्योऽस्याः प्राचार्या, प्राचार्यः, प्राचार्यं, प्रादयो गताद्यर्थे प्रथमया (वा० १३३५/७८०), प्रादिभ्योऽधातुजस्य वाच्यो वा ( वा० १३६०/८३० ) इत्युत्तरपदलोपः । अतिक्रान्ता खट्वामतिखट्वा, अतिखट्वः, अतिखट्वं, अत्यादयः क्रान्ताद्यर्थे द्वितीयया ( वा० १३३६/७८० ) । अवक्रुष्टा कोकिलया चूतकलिकावकोकिला, अवकोकिलः, अवकोकिलं, अवादयःक्रुष्टाद्यर्थे तृतीयया ( वा० १३३७/७८० ) । परिग्लानाऽध्ययनाय पर्यध्ययना पर्यध्ययनः, पर्यध्ययनं, पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ( वा० १३३८/७८० ) । निष्क्रान्ता मर्यादाया निर्मर्यादा, निर्मर्यादः, निर्मर्यादं, निरादयःक्रान्ताद्यर्थे पञ्चम्या ( वा० १३३९/७८० ) । अलं जीविकायै—अलंजीविका, अलंजीविकः, अलंजीविकम् । प्राप्ता जीविकां प्राप्तजीविका, प्राप्तजीविकः, प्राप्तजीविकम् । आपन्ना जीविकामापन्नजीविका आपन्नजीविकः, आपन्नजीविकं, प्राप्तापन्ने च द्वितीयया (२।२।४/७१५)। वाच्यलिङ्ग इत्यर्थः । पञ्चसु कपालेषु संस्कृता पञ्चकपालाऽपूपिका, पञ्चकपालः पुरोडाशः, पञ्चकपालं हविः । संख्या सर्वनाम च तदन्ताश्च वाच्यलिङ्गाः—एका, एकः, एकं, तिस्रः, त्रयः, त्रीणि, सर्वा, सर्वः, सर्वम् । संख्यान्ताः—ऊनास्तिस्रो यासां ता ऊनतिस्रः, ऊनत्रयः, ऊनत्रीणि । सर्वनामान्ताः—द्वाभ्यामन्या द्व्यन्या, द्व्यन्यः, द्व्यन्यत् ॥ ४३ ॥ बहु-

| | |
|---|---|
| (*c*) Compound epithets, | ४४ बहुव्रीहिर्-दिङ्-नाम्नामुन्नेयं तदुदाहृतम्, । |
| (*d*) Epithets expressing a quality, thing, or action. | गुण-द्रव्य-क्रिया-योगोपाधयः परगामिनः, ॥ |
| (*e*) Verbal active nouns. | ४५ कृतःकर्तर्यसंज्ञायां, कृत्याः कर्तरि कर्मणि । passive nouns. |
| (*f*) Adjective derived from nouns. | अणाद्यन्तास् तेन रक्ताद्यर्थे नानाऽर्थ-भेदकाः, ॥ |
| (*g*) Some numerals, etc., do not vary. | ४६ षट्-संज्ञकास् त्रिषु समा युष्मदस्मत्-तिङव्ययम् । |
| | परं विरोधे, शेषं तु ज्ञेयं शिष्ट-प्रयोग-तः ॥ |

इति लिङ्गाऽदि-संग्रह-वर्गः ५. अत्र मूलश्लोकाः ४६, क्षे. श्लो. ०

---

व्रीहिर्वाच्यलिङ्गः—चित्रा गावोऽस्याश्चित्रगुः स्त्री, चित्रगुर्ना, चित्रगु कुलम् । अदिग्नाम्नामिति किं–दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा, एवं पूर्वोत्तरा सा विदिक् । गुणादिभियोग उपाधिः प्रवृत्तिनिमित्तं येषां ते परगामिनो वाच्यलिङ्गाः । गुणोपाधिः–शुक्ला शाटी, शुक्लः पटः, शुक्लं वस्त्रम् । द्रव्योपाधिः–दण्डिनी स्त्री, दण्डी पुमान्, दण्डि कुलम् । क्रियोपाधिः–पाचिका, पाचकः, पाचकम् ॥ ४४ ॥ कर्तर्यर्थे संज्ञावर्जिताः कृदन्ता वाच्यलिङ्गाः–कर्त्री, कर्ता, कर्तृ, कुम्भकारी, कुम्भकारः कुम्भकारम् । असंज्ञायामिति किं–ग्रहः, व्याघ्रः । कर्तृकर्मार्थे कृत्या वाच्यलिङ्गाः–वास्तव्या, वास्तव्यः, वास्तव्यं, वसेस्तव्यत्कर्तरि णिच्च ( वा० १।१।२।०/२।८।३।४ ), कर्तव्या, कर्तव्यः, कर्तव्यम् । कर्तरि कर्मणीति किं–स्थातव्यं त्वया, ब्रह्मभूयं, हत्या । असंज्ञायामित्येव–सूर्यः, भिद्योद्ध्यौ नदे ( ३।१।११५/२८६६ ) । तेन रक्तमित्यादावर्थेऽअणादितद्धितान्ता वाच्यलिङ्गाः–हरिद्रया रक्ता हारिद्री हारिद्रः, हारिद्रं, काक्षाभियुं( भीर )–क्ता लाक्षिकी, लाक्षिकं, कृत्तिकाभियुक्ता कार्तिकी पौर्णिमासी, कार्तिको दिवसः, कार्त्तिकमहः । इन्द्रो देवतास्या ऐन्द्री ( ऋक् ), ऐन्द्रो मन्त्रः, ऐन्द्रं हविः । असंज्ञायामित्येव–श्रावणपौर्णमासी, अश्वत्था पौर्णमासी, संज्ञायां श्रवणाश्वत्थाभ्याम् ( ४।२।५/१२०६ ) इत्यणो लुप् । नानाविधार्थविशेषा येषां ते वाच्यलिङ्गाः–को ब्रह्मा, कं शिरः, नभः खं, नभाः श्रावणः । नानार्था विशेषणानि वेत्येके–मूर्खा, मूर्खः, मूर्खं, विदुषी, विद्वान्, विद्वत् ॥ ४५ ॥ ष्णान्ता षट् ( १।१।२४/३६९ ) इति षट्संज्ञकाः, तथा युष्मदस्मच्छब्दौ, आख्यातान्यव्ययानि च त्रिलिङ्ग्यां समानि लिङ्गकृतविशेषरहितानीत्यर्थः । षट् स्त्रियः, षड्रसाः, षट् कुलानि, पञ्च स्त्रियः, पञ्च शराः,पञ्चेन्द्रियाणि, त्वं स्त्री, त्वं पुमान्, त्वं कुलं, अहं स्त्री, अहं पुमान्, अहं कुलं, ब्रूते स्त्री, ब्रूते पुमान्, ब्रूते कुलं, नानास्त्रियः, नानादेशाः, नानाकुलानि, उच्चैः स्त्री, उच्चैस्तरुः, उच्चैर्वनं, तत्र परि, तत्र देशे, तत्र वने, एवं कति स्त्रियः, कति जनाः, कति खानि ।

४७ इत्यमरसिंह-कृतौ नाम-लिङ्गाऽनुशासने।
सामान्य-काण्डस् तृतीयः साऽङ्ग एव समर्थितः
इति तृतीयः सामान्य-काण्डः समाप्तः।
इत्यमरसिंह-कृतं नामलिङ्गाऽनुशासनम्।
काण्ड-त्रयाऽऽत्मकं साङ्गोपाङ्गं संपूर्णतामगात्. ॥ १ ॥

अत्र मूलश्लोकाः ४८०॥; क्षे. श्लोकाः २५॥ सर्वे च मिलित्वा ५१३॥.

## अमरकोशस्थश्लोकानां कोष्टकम्

प्र. काण्डे मू. श्लो. २८१॥; क्षे. श्लो. १८; सर्वे च मिलित्वा २९९॥
द्वि. काण्डे मू. श्लो. ७३५॥; क्षे. श्लो. १४॥; सर्वे च मिलित्वा ७५०
तृ. काण्डे मू. श्लो. ४८०॥; क्षे. श्लो. २५॥; सर्वे च मिलित्वा ५१३॥

---

एवं सर्वेषां काण्डानां योगः मू. श्लो. १४९७॥; क्षे. श्लो. ५८;
सर्वे च मिलित्वा १५६३.

---

लिङ्गविशेषविधौ पूर्वापराविरोधे परं लिङ्गं भवति। असुरपर्यायाः पुंस्त्व इत्यस्य विषये—नैर्ऋतः, राक्षसः। द्व्यच्कमसिसुसन्नन्तमिति तृतीय इत्यस्य विषये—इदं तेजः, यशः। इहोभयं प्राप्नोति—इदं रक्षः, परत्वात्क्लीबे। इह यत्रोक्तं तल्लक्ष्यतो द्रष्टव्यं, यथा—गोधा पुंध्वजापि स्त्री, तथा पोटा नपुंसकमपि स्त्री। तथाव्यक्ते गुण-संदेहे नपुंसकलिङ्गं प्रयुज्यते—किं तस्या जातं स्त्री पुमान्वा, शक्यं स्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तथा तयप्प्रत्ययान्तं धर्मवृत्ति स्त्रीनपुंसकयोः—वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्, वेदानां त्रयी, वेदत्रयम्। धर्मवृत्ति तु वाच्यलिङ्गं—त्रय्यः स्थितयः, त्रये लोकाः, त्रयाणि जगन्ति। तथा छन्दसोऽण् स्वार्थे क्लीबे—गायत्र्येव गायत्रं, अनुष्टुबेवानुष्टुभम्। तथा इकस्तिबन्तः पुंसि—अयं वृद्धिः, अयं पचतिः। तथा दरद् ह्रस्वेकश्च स्त्रियां—इयं दरद्देशः, गृह्यकण्डिका, छत्त्रिका, दण्डिका, नालिका, नासिका। तथा प्रमाणाद्या अजहल्लिङ्गवचनाः—वेदाः प्रमाणं, स्मृतयः प्रमाणं, भूतमियं ब्राह्मणी, विप्राशिषो भद्रम्॥ ४६॥ इति लिङ्गसंग्रहवर्गः॥ ५॥

इति श्रीभट्टक्षीरस्वामिकृतटीकासहितेऽमरकोशोद्घाटने
सामान्यकाण्डं तृतीयं समाप्तम्।

# AMARA'S NĀMALINGĀNUS'ĀSANA

## ENGLISH WORD INDEX

*The figures refer to the pages*

( By D. G. Padhye )

B

D

N



O

## U



## V

# INDEX

## II

### Index of Words in Kṣīraswāmin's Text of Amarkośa

# Appendix III

**Index of additional words given by Kṣīrasvāmin, as well as those of Amarasimha which are specially remarked upon in the Commentary.**

# APPENDIX IV

Unverified quotations from Kṣīrasvāmin's Commentary on Amarakośa, some of which are partly verified. Where quotations are not found in works earlier than Kṣīrasvāmin, they have been located in later works, such as सिद्धान्तकौमुदी, etc.

*Scholars are requested to trace the exact quotations and to inform the Publisher. Their names would be thankfully acknowledged in the next edition.*

Page

337 अकच् प्रकरणे तूष्णीमः काम् वक्तव्यः (स. कं. 5-3-97)

268 अकरणिरिह भूयात् अप्रशस्तस्य धातुः

325 अक्षाः षोडश माणकाः ।

345 अग्निदो गरदश्चैव । (मनु. 3-158)

104 अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः । (आश्वलायन श्रौ. सू. 6. 11)

337 अग्रतो धावति श्रीः ।

325 अग्रतो बाहुपाशेन केशपाशेन पृष्ठतः । पार्श्वयोः कर्णपाशेन सर्वतो बन्धनं प्रिया ।

308 अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः । (याज्ञव. III.1.17)

282 अत्राथ प्रभुः प्रमाणम् ।

343 अदन्तैः द्विगुरेकार्थे । (स. कं. 3-3-120-121)

215 अदुग्धा दोहकाले ।

180, 329 अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । (quoted by चारित्रवर्धन on Raghu II. ३२)

अजयत् द्विपतः प्रासनयः परमहेलया ।

Page

स्वप्नेऽपि मनसि स्पृष्टो न यः परमहेलया ॥

52, 321 अनुभावः त्वभिनयः पश्चादर्थप्रकाशनम् ।

अनुबन्धं अवस्थां च ज्ञात्वा दण्डं निपातयेत् ॥ (अमरभारतौ ?)

160 अगुरुप्रवरं लोहं कृमिजग्ध—।

315 अन्तरं देहि । (बालरामायणे ?)

315 अन्तरं लब्धारेः प्रहरेत् ।

315, 337 अन्तरेण पुरुषकारं न सिध्यति । (काशिका 2-3-4)

315 अन्तरज्ञो भव सदा धनस्य च जनस्य च ।

226 अन्तःपुररक्षिता । (वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः । राज्ञामन्तःपुररक्षिता विनीतस्तथोच्यते ॥) (युक्तिकल्पतरौ ?)

46 अन्धो नाम मणिमुपाविध्यत् ।

335 अन्धो नाम पर्वतं आरोहति । (अमरभारतौ ?)

337 अन्यो धनं प्रेत्य गतस्य भुंक्ते ।

310 अन्योन्यवृत्तसंगरः ।

206 अन्वयाधिश्रयणी भवेत्

